# ऐसा भी होता है!

शाम का वक्त था. सोनू स्कूल से घर लौट रहा था. अचानक तेज़ हवा चलने लगी...
और एक उड़न-तश्तरी आसमान से उतरी और ठीक सोनू के पास आकर रुक गई...
























पारले
मैंगो बाइट

कविहृदयम्–

# एकः गम्यः देवः

त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्यात् ऋजु-कुटिल-नाना-पथजुषां
नृणामेको गम्यस्त्वमसि पयसाम् अर्णव इव॥

"मानवानाम् अभिरुचयः विभिन्नाः। अभिरुचीनाम् अनुगुणं तैः विभिन्नाः मार्गाः आश्रिताः। 'एतत् एव श्रेष्ठम्', 'एतत् एव परमोत्कृष्टम्', 'एतदेव पथ्यम्' इत्येवं वदन्तः ते स्वाभिमतस्य श्रेष्ठतां प्रतिपादयन्ति। यथा मार्गेषु ऋजु-वक्र-दूर-कष्टकर-प्रभृतयः भेदाः सम्भवन्ति तथैव प्रस्थानेषु अपि वैविध्यम् अस्ति। किन्तु विभिन्नस्थानेभ्यः निर्गताः नद्यः अग्रे गत्वा एकमात्राश्रये समुद्रे यथा विलीनाः भवन्ति तथैव, हे प्रभो, सर्वेषां मतानां गम्यं स्थानं त्वम् एव असि" इति कश्चित् विवेकी भक्तः भगवन्तम् उद्दिश्य वदति।

सर्वधर्मसमभावः, सर्वधर्मसमन्वयः, जात्यतीतभावः इत्यादयः शब्दाः एषु दिनेषु बहुधा श्रूयन्ते। धर्मः, मतं, जातिः– इत्येतेषां पदानाम् अर्थं सम्यक् अजानद्भिः बहुभिः अर्थान्तरे शब्दप्रयोगः क्रियमाणः दृश्यते। देवविषयः कोऽपि प्रस्तूयते चेत् जात्यतीतभावनायाः भङ्गः भवति इति केचन भावयन्ति। किन्तु किं देवे विश्वासं विना कोऽपि लोके जीवेत्? भावनाप्रधानस्य मानवस्य जीवने दैवावलम्बनं प्रायः अनिवार्यम्। अतः एव निरीश्वरवादप्रतिपादकाः अपि जीवने कदाचित् परमदैवभक्ताः जाताः दृश्यन्ते।

'एको देवः नाम विभिन्नम्' इति एतत् तत्त्वं भारते बहुप्राचीनकालात् अपि प्रतिपाद्यमानम् अनुस्रियमाणं च अस्ति। श्रुति-स्मृति-पुराणादयः अपि एतत् एव तत्त्वं प्रतिपादयन्ति। यद्यपि केषुचित् पुराणेषु ग्रन्थेषु वा कस्यचित् देवविशेषस्य परमोत्कर्षः प्रतिपादितः दृश्यते, तथापि देवस्य एकत्वं तु न निराक्रियते। देवविशेषस्य परमोत्कर्षः प्रतिपाद्यते यत् तत् तु 'आदरः अभिवर्धताम्' इति उद्देशेन, न तु अन्यदेवापकर्षोद्देशेन।

वस्तुतत्त्वम् अजानन्तः पामराः कदाचित् एकदेववादं निराकुर्युः नाम। किन्तु देवनामकं वस्तु तु एकम् एव। नाम्नि विवादः कदाचित्।

# नदीमूलम् अन्वेष्टुं गतवन्तः वयम्

| | |
|---|---|
| माता - कुत्र गतवान् आसीत् वत्स ? एतावता विलम्बेन वा प्रत्यागमनम् ? | Where did you go ? Why are you so late ? |
| पुत्रः - हरीशद्वारा वार्ता प्रेषितवान् आसं खलु - आगमने विलम्बः भविष्यति इति । | Mother, I had sent word through Harish that I would be lae. |
| मा - तत्तु सत्यम् । किन्तु एतावता विलम्बेन प्रत्यागमनं किं शोभते ? | That is right. But is it good to come home late ? |
| पु - इतः प्रकाशस्य गृहं गतवान् किल ? तत्र अकस्मात् कार्यक्रमः निश्चितः । अतः ... | Mummy, I went from here to Prakash's house as you know. A programme was suddenly arranged there. So ... |
| मा - सर्वे मिलित्वा कुत्र गतवन्तः ? | Where did all of you go ? |
| पु - अस्माकं ग्रामस्य नदी अस्ति किल ? तस्याः मूलम् अन्वेष्टुं गतवन्तः । | We went to trace the origin of the river flowing along our village. |
| मा - पूर्वनिश्चितः कार्यक्रमः न वा एषः ? | Wasn't it a pre-arranged programme ? |
| पु - न अम्ब ! प्रकाशस्य गृहं प्रदीपादयः अपि आगताः आसन् । प्रातः एव निर्णीतम् - झटिति एव गमनम् इति । | No mother, Pradeep and others had to come to Prakash's house. So, it was decided only in the morning and we had to leave immediately. |
| मा - पाथेयं किमपि अनीत्वा ... | Without carrying food for the way ? |
| पु - प्रकाशस्य गृहात् एव सर्वेभ्यः अपि पाथेयं स्वीकृतम् । | We carried it from Prakash's house. |
| मा - हुं, हस्तौ पादौ च प्रक्षाल्य भोजनार्थम् आगच्छतु तावत् । विरामदिनेषु भवतां निग्रहीतारः एव न भवन्ति । | O.K. Have a wash and come for lunch. It is difficult to control you during the holidays. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अग्न्यस्त्रम् - | Cannon | तन्त्री - | Wire |
| अननुरक्ता - | A woman not in love | निरातङ्कम् - | Without hinderence |
| अनासक्तः - | Disinterested | पङ्गुः - | A cripple |
| अनुकम्पः - | Pity | पञ्जीकरणम् - | Registration |
| अनुमन्तव्यम् - | Should consent | परावलम्बी - | Dependant |
| अभिमुखम् - | Facing | पर्पटः - | Papad |
| अवगुण्ठनम् - | Veil | पुलाकः - | A grain of cooked rice |
| अवचेतुम् - | To pluck | प्रयाणिकः - | Traveller |
| अवधानम् - | Attention | प्रवालः - | Coral |
| असहिष्णुता - | Intolerance | प्राप्तिपत्रम् - | Receipt |
| आपत्तिः - | Trouble | फेनकम् - | Soap |
| उदितम् - | Dawned | भूयान् - | Most of (part) |
| कटाक्षः - | Side-glance | मध्येमार्गम् - | Midway |
| कुब्जः - | A dwarf | यन्त्रमानवः - | Robot |
| काचित्कतया - | Rarely | विपरीतम् - | Opposite |
| क्षन्ता - | One who endures | सम्भवति - | Happens |
| क्षमा - | Forgiveness | सुगन्धतैलम् - | Scented Oil |
| तण्डुलः - | Rice | संवृत्तम् - | Happened |
| तक्षकवृत्तिः - | Carpentry | स्थाली - | Vessel for cooking rice |



# चन्दमामा

एप्रिल् - १९९४

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४.००
वार्षिक ग्राहकशुल्कं रू. ४८.००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः'　　सञ्चालकः - 'नागिरेड्डी'

## सर्वेषां कृते विद्याभ्यासव्यवस्था

गते डिसेम्बर्मासे नवानां देशानां प्रतिनिधयः सम्भूय विद्याभ्यासविषये चर्चां कृतवन्तः । तैः ये निर्णयाः कृताः तेषां कार्यान्वयनं कथम् इति समालोचनं कर्तुम् एषु दिनेषु सर्वेषां राज्यानां मुख्यमन्त्रिणः देहल्यां सम्मिलिताः, विचारविनिमयं कृतवन्तः च ।

भारतदेशः नायकत्वं निर्वहन्, अधिकजनसङ्ख्यायुतानां नवदेशानां सम्मेलनम् आयोजितवान् आसीत् । तस्मिन् सम्मेलने ब्रेजिल्, चीना, ईजिप्, इण्डोनेशिया, मेक्सिको, नैजीरिया, पाकिस्थानम् इत्येते देशाः भारतं च भागम् अवहन् । एतस्य सम्मेलनस्य चर्चाविषयः आसीत् यत् - ''सर्वेषां कृते विद्याभ्यासव्यवस्था ।'' एतस्य शतकस्य समाप्तितः पूर्वम् एतेषु नवसु देशेषु स्थिताः सर्वे बालाः विद्याभ्यासार्थम् अवकाशं प्राप्नुयुः इति सम्मेलनस्य आशयः आसीत् ।

एषः उद्देशः सर्वैः देशैः अनुमतः एव । मानवविकासार्थम् अधिकम् अवधानं दातव्यम् इति, राष्ट्रस्य सम्पत्तेः भूयान् भागः विद्याभ्यासार्थं व्ययीकरणीयः इति, विद्यमानायाः प्राप्स्यमानायाः च सम्पत्तेः उत्तमविनियोगः करणीयः इति च सम्मेलने निर्णीतम् ।

एतत्सर्वं साधयितुं धनं कुतः प्राप्येत इति समस्या उत्पन्ना । कोऽपि देशः विद्याभ्यासनिमित्तं करभारम् आधिक्येन जनानाम् उपरि आरोपयितुं न ऐच्छत् । एवं तर्हि अन्यधनमूलानि - तन्नाम विश्ववित्तकोषः, अन्ताराष्ट्रियधनव्यवहारनिधिः (ऐ.एम्.एफ्.) इत्यादीनि - आश्रयणीयानि इति तु सिद्धम् । किन्तु एताः संस्थाः नियमं सूचितवत्यः यत् धनसाहाय्यं केनचित् प्रमाणेन क्रियते इति, सम्पन्मूलाभिवृद्ध्यर्थं तत्तद्देशेन अपि प्रयत्नः करणीयः इति च । एते नियमाः शिथिलीकरणीयाः इति सम्मेलनेन निवेदनं कृतम् अस्ति ।

भारतविषयः तु एवम् - मुख्यमन्त्रिणः कीदृशं निर्णयं कुर्वन्ति इत्येतं विषयम् अवलम्ब्य विद्याभ्यासव्यवस्थायाः भविष्यं निर्णीतं भविष्यति । प्राथमिकविद्याभ्यासार्थं महान् धनव्ययः क्रियमाणः अस्ति इत्यतः बालाः विद्याभ्यासे रुचिमन्तः यथा स्युः, आप्रातः आसायम् आसक्त्या ते यथा पठेयुः तथा करणं कथम् इत्यपि मुख्यमन्त्रिभिः चिन्तनीयम् एव ।

सम्पुटः - ११　　एप्रिल् - १९९४　　सञ्चिका - १

प्रतिकृतिमूल्यं रू. ४.००　•　वार्षिकं ग्राहकशुल्कं रू. ४८.००

# नामनिर्वचनम्-१५

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]*

**कावेरी–** कं जलम् एव वेरं शरीरम् अस्याः इति कावेरी। [क+वेर+अण्+ङीप्] कावेरी कर्णाटकस्था काचित् प्रसिद्धा नदी। यस्याः जलम् एव शरीरं सा कावेरी इति तात्पर्यम्। कवेरस्य मुनेः (राज्ञः वा) पुत्री कावेरी इत्यपि पुराणेषु श्रूयते।

स्नानमात्रेण एषा पापानि निवारयति इति दक्षिणभारते प्रसिद्धिः। तथा हि महाभारते (वनपर्वणि)–

''ततो गच्छेत कावेरीं वृतामप्सरसां गणैः।
तत्र स्नात्वा नरो राजन्! गोसहस्रफलं लभेत्'' इति।

**गङ्गा–** गम्यते प्राप्यते ज्ञाप्यते मोक्षार्थिभिः या सा गङ्गा। गमयति, प्रापयति, ज्ञापयति वा भगवत्पादं या शक्तिः सा गङ्गा इति वा। [गम्लृ(गतौ)+गन्+टाप्] मोक्षम् इच्छन्तः यां शरणं गच्छन्ति, या भगवत्पादं प्रापयति सा गङ्गा इति तात्पर्यम्। गङ्गानदी लोके नितरां प्रसिद्धा। 'भागीरथी', 'जाह्नवी' इतयादीनि तस्याः नामान्तराणि।

ब्रह्मपुराणे गङ्गायाः माहात्म्यम् एवं वर्णितम्–

''स्पृष्ट्वा स्वर्गमवाप्नोति पीत्वा ज्ञानमवाप्नुयात्।
गङ्गास्नाने तु भक्त्या वै प्राप्नोति परमं पदम्॥'' इति।

**यमुना–** यच्छति उपरमते गङ्गायाम् इति, यमयति इति वा यमुना। [यम(उपरमे)+उनन्+टाप्] उपरतिः नाम विश्रान्तिप्राप्तिः। गङ्गासङ्गमात् यमुनानदी उपरता भवति इत्यतः सा यमुना। अथवा सा जनान् विश्रान्तिं गमयति इत्यतः अपि यमुना। एषा यमस्य भगिनी। सूर्यतनया। श्रीकृष्णस्य बह्व्यः लीलाः एतस्याः तीरे अभवन्।

'यमुना' इति पदस्य 'दुर्गा' 'पार्वती' इत्यपि अर्थः अस्ति।

---

**सूचना–** भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।

सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.

वार्ताविशेषः -

# महामस्तकाभिषेकः

यथा 'कुम्भमेला', 'गोदावरीसङ्क्रमः' च प्रचलतः तथैव बाहुबलेः महामस्तकाभिषेकमहोत्सवः अपि द्वादशसु वर्षेषु एकवारं प्रचलति। कर्णाटकराज्यस्य हासनमण्डले श्रवणबेळगोळनामकः प्रदेशः अस्ति। तत्र इन्द्रगिरौ बाहुबलिविग्रहः अस्ति। प्रपञ्चे एव अत्युन्नतः इति ख्यातः एषः विग्रहः अखण्डया शिलया निर्मितः अस्ति।

९८१ तमे वर्षे एतस्य विग्रहस्य प्रतिष्ठापनं जातम्। विंशतितमे शतके १९०० तमे वर्षे, १९१०, १९२३, १९४०, १९५३, १९६७, १९८१ इत्येतेषु वर्षेषु महामस्तकाभिषेकः प्राचलत्। विंशतितमे शतके एव अष्टमवारं महामस्तकाभिषेकः प्रवृत्तः। स च कार्यक्रमः १९९३ तमे वर्षे डिसेम्बर् १९ दिनाङ्के महता वैभवेन प्रवृत्तः। विग्रहस्य प्रतिष्ठापनस्य अनन्तरं प्रचलिते पञ्चाशीतितमे अस्मिन् उत्सवे असङ्ख्याकाः भक्ताः भागं गृहीतवन्तः। महोत्सवस्य अस्य कार्यक्रमाः महता वैभवेन व्यवस्थापिताः आसन्। शुभनक्षत्राणां ग्रहाणां च मेलनम् अनुसृत्य ज्योतिषिकैः निर्णीते मुहूर्ते अयम् उत्सवः आयोज्यते। अतः द्वादशवर्षाणाम् अन्तरस्य कश्चन भेदः भवति।



चतुर्विंशत्यां तीर्थङ्करेषु अन्तिमः वर्धमानः महावीरः जैनमतस्य प्रवर्तकः। प्रथमः तीर्थङ्करः आदिनाथः ऋषभदेवः राजा। सः ज्येष्ठपुत्राय भरताय अयोध्यां दत्त्वा, द्वितीयाय बाहुबलिने पौदनपुरं दत्त्वा इहलोकं परित्यक्तवान्। भरतस्य दुराशा यत् - अनुजस्य राज्यम् अपि स्वायत्तीकरणीयम् इति। अतः सः बाहुबलिनं सम्मुखीकर्तुं सिद्धः जातः। उभौ अपि ससैन्यं युद्धसन्नद्धौ जातौ।

'युद्धं मुग्धानां जनानां नाशाय भवति। अतः सैन्यं मास्तु। भवन्तौ केवलं युद्धं कुरुताम्' इति मन्त्रिणः भरतं बाहुबलिनं च बोधितवन्तः। सहोदरौ मन्त्रिणाम् एतत् हितवचनम् अङ्गीकृतवन्तौ।

बाहुबलिभरतयोर्मध्ये दृष्टियुद्धं जलयुद्धं मल्लयुद्धं च प्राचलत्। त्रिषु अपि भरतः पराजितः। बाहुबली भरतं हस्तद्वयेन अपि उन्नीय अधः पातयितुम् उद्युक्तः। किन्तु तावता बाहुबलिनि ज्ञानम् उदितम्। अत्याशया अग्रजः भरतः कीदृशीं स्थितिं प्राप्तवान् इति ज्ञातवान् सः। ततः विरक्तः बाहुबली स्वराज्यम् अपि त्यक्त्वा कुत्रापि गतवान्।

स्वस्य व्यवहारेण पश्चात्तापम् अनुभवन् भरतः अनुजं बहुधा प्रार्थितवान् - 'मा गच्छतु, अत्रैव तिष्ठतु' इति। किन्तु बाहुबली दृढमनसा निद्राहारादिकं परित्यज्य बहुकालं यावत् तपः कृतवान्। तं परितः लताः

वर्धिताः। ताः लताः बाहुबलिनः पादयोः हस्तयोः च युक्ताः अभवन्।

भरतः पुनरपि बाहुबलिनः समीपं गत्वा प्रार्थितवान् - ''श्रमण। मदीयमिति किमपि नास्ति। आगच्छतु कृपया'' इति। किन्तु बाहुबली तपः न त्यक्तवान्। तस्य सङ्कल्पः सुदृढः एव आसीत्। किञ्चित्कालानन्तरं मोक्षं प्राप्तवान् सः। अनन्तरं भरतः अनुजस्य बाहुबलिनः सुवर्णविग्रहं कारयित्वा पौदनपुरे प्रतिष्ठापितवान्।

दशमे शतके गङ्गवंशीयस्य राचमल्लस्य आस्थाने चामुण्डरायनामकः प्रधानमन्त्रिरूपेण सेनाधिपतिरूपेण च आसीत्। तस्य मातुः कावेरीदेव्याः इच्छा जाता यत् बाहुबलिनः सुवर्णविग्रहस्य दर्शनं करणीयम् इति। सा पुत्रं चामुण्डरायम् आचार्यम् अजितसेनं च स्वीकृत्य पौदनपुरं प्रति प्रस्थितवती। ते मध्येमार्गं कस्याञ्चित् रात्रौ इन्द्रगिरि-चन्द्रगिर्योः मध्ये विद्यमाने प्रदेशे वासं कृतवन्तः। तस्यां रात्रौ तैः त्रिभिः अपि समानः स्वप्नः दृष्टः। स्वप्ने देवी कुष्मन्दिनी प्रत्यक्षा जाता। सा तान् उक्तवती - ''भवन्तः पौदनपुरे बाहुबलिनः सुवर्णविग्रहं द्रष्टुं न शक्नुवन्ति। चन्द्रगिरेः उपरि स्थित्वा दक्षिणदिशि स्थितस्य इन्द्रगिरेः उपरि बाणप्रयोगं कुर्वन्तु'' इति। तस्याः वचनानुसारम् अनन्तरदिने प्रातः चामुण्डरायः सुवर्णबाणस्य प्रयोगं कृतवान्। सः बाणः यत्र पतितः, तत्र बाहुबलिनः स्वरूपं दृष्टम्।

चामुण्डरायः तत्रैव बाहुबलिविग्रहस्य प्रतिष्ठापनम् कर्तुम् इच्छन् कांश्चन शिल्पिनः तत्र आनायितवान्। अरिष्टनेमिनामकस्य शिल्पिनः नेतृत्वे महतः बाहुबलिनः अखण्डशिलाविग्रहः सिद्धः। इन्द्रगिरौ ९८१ तमवर्षस्य मार्चमासस्य २३ दिनाङ्के विग्रहस्य प्रतिष्ठापनं कृत्वा चामुण्डरायः महामस्तकाभिषेकं कारितवान्। चामुण्डरायस्य बाल्यनाम 'गोमट' (सुन्दरः) इति आसीत्। तेन विग्रहः प्रतिष्ठापितः इति कारणतः बाहुबलिविग्रहः 'गोमटेश्वरः' इति नाम्ना प्रख्यातः अभवत्।

उत्तराभिमुखस्य अस्य विग्रहस्य औन्नत्यम् ५७ द्वादशाङ्गुलपरिमितम्। गोमटेश्वरः गम्भीरः ईषद्हसन्मुखश्च। ततः सर्वेऽपि आकृष्टाः भवन्ति। तस्य मुखं शान्तिम् अहिंसां च प्रपञ्चं बोधयत् अस्ति इव भासते। जैनमतम् अहिंसां बोधयति। विग्रहस्य पादयोः पुरतः कश्चित् लघुः तटाकः अस्ति। एतं तटाकं 'बेळ्गोळ' इति वदन्ति। अपूर्वा कलाकृतिः एषा।

यद्यपि एषा मूर्तिः अत्युन्नता अस्ति, तथापि शिल्पिना एतस्य निर्माणे तादृशं वैशिष्ट्यं प्रदर्शितं यत् एतस्य सर्वाणि अपि अङ्गानि स्वपरिमाणानुगुणम् एव सन्ति। एवं योग्यपरिमाणयुक्तता सजीवत्वभानं च एतस्याः मूर्तेः वैशिष्ट्यम्।

## महामस्तकाभिषेकक्रमः

पूजाविधयः यद्यपि पञ्चदशदिनेभ्यः पूर्वमेव आरब्धाः भवन्ति, तथापि प्रमुखः अभिषेकः षड् घण्टां यावत् प्रचलति। प्रथमतया विग्रहः इक्षुरसेन, क्षीरेण, सस्यरसैः च अभिषिच्यते। अनन्तरं तटाकस्य जलेन विविधनदीनां १००८ कलशमितैः पवित्रजलैः विग्रहम् अभिषिञ्चन्ति भक्ताः। अनन्तरं त्रिविधैः चन्दनद्रव्यैः, विविधैः पुष्पैः च मस्तकाभिषेकः प्रचलति। अनन्तरं जलेन अभिषेकं कृत्वा सर्वसङ्गत्यागिनं बाहुबलिनम् अष्टविधफलपुष्पैः अर्चन्ति।



# अपूर्ववीणा

सङ्गीतपुरनामके ग्रामे कोऽपि सङ्गीत-विद्वान् नास्ति। तत्र सङ्गीतवाद्यानाम् एकः एव आपणः अस्ति। तस्मिन् आपणे वीणा-वेणु-मृदङ्गादयः लभ्यन्ते। तस्मात् एव कारणात् सङ्गीतपुरनाम्ना प्रख्यातः सः ग्रामः।

तस्य सङ्गीतवाद्यानाम् आपणस्य स्वामी मुकुन्दः। सः वृद्धः इति कारणतः तस्य पुत्रः मुरारिः केभ्यश्चित् दिनेभ्यः आपणस्य व्यवहारं पश्यति स्म।

सङ्गीतपुरात् अनतिदूरे एव रजतपर्वतः अस्ति। सङ्गीतवाद्यानां निर्माणार्थम् उपयोगिनः वृक्षाः सन्ति तस्मिन् रजतपर्वते। मुरारिः मासे एकवारं कर्मकरैः सह तं रजतपर्वतं गच्छति। वाद्यनिर्माणार्थं योग्यानि काष्ठानि सङ्गृह्य गृहम् आनयति। वाद्यनिर्माणं करोति च। तस्य आपणे विक्रीयमाणानि वाद्यानि उत्तमजातीयानि इति सर्वत्र प्रतीतिः आसीत्।

तस्य देशस्य राज्ञः पुत्री चारुलता भटद्वारा मुरारये वार्तां प्रेषितवती यत् - उत्तमं वीणावाद्यम् आवश्यकम् इति, तच्च वाद्यम् उत्तमसालवृक्षस्य काष्ठेन निर्मितं स्यात् इति च।

मुरारिः - "इदानीं तादृशम् उत्तमं वीणावाद्यं नास्ति मम आपणे। सप्ताहाभ्यन्तरे वीणां सज्जीकृत्य अहम् एव आनीय दास्यामि इति युवराज्ञीं वदतु भवान्" इत्युक्त्वा तं भटं प्रेषितवान्।

अनन्तरदिने एव मुरारिः सालकाष्ठस्य सङ्ग्रहणार्थं कर्मकरेण सह रजतपर्वतं गतवान्। मध्याह्नपर्यन्तम् समग्रे पर्वतप्रदेशे अन्विष्टं चेदपि सालवृक्षः न प्राप्तः ताभ्याम्।

मध्याह्नसमये मुरारिः कर्मकरश्च गृहतः नीतम् आहारं खादितवन्तौ। पुनरपि सालवृक्षस्य अन्वेषणार्थं तौ प्रस्थितवन्तौ।



किञ्चित्कालानन्तरं कस्यचित् तटाकस्य पार्श्वे स्थितः सालवृक्षः ताभ्यां दृष्टः। वृक्षस्य दर्शनेन अतीव सन्तुष्टः मुरारिः। किन्तु सः वृक्षः बहुभिः पर्णैः युक्तः आसीत्। एतेन मुरारिः चकितः। तथापि सः कर्मकरम् आदिष्टवान् यत् एतस्य वृक्षस्य च्छेदनं करोतु इति। कर्मकरः स्कन्धे विद्यमानं वस्त्रं शिरसि बद्ध्वा वृक्षस्य मूलम् एव च्छेत्तुं परशुं गृहीतवान्।

तावता - "तिष्ठतु। मम निवासं मा नाशयतु" इति कस्याश्चित् महिलायाः कण्ठध्वनिः श्रुतः वृक्षतः। अपरक्षणे एव काचित् यक्षिणी तयोः पुरतः प्रत्यक्षा जाता।

एतेन मुरारिः कर्मकरश्च भीतौ मौनं स्थितवन्तौ। तदा यक्षिणी - "एतत् मम वासस्थानम्। बहुभ्यः वर्षेभ्यः अहम् अत्र निरातङ्कं जीवनं यापयन्ती अस्मि। तदास्तां तावत्। भवान् किमर्थम् अत्र आगत्य एतं वृक्षं च्छेत्तुम् उद्युक्तः?" इति पृष्टवती।

यक्षिणी विना कोपं शान्तस्वरेण एव सम्भाषणं कृतवती इति कारणतः मुरारेः भयं किञ्चित् अपगतम्। सः धैर्येण उक्तवान् - "मया उत्तमां वीणां सज्जीकृत्य राजकुमार्यै चारुलतायै प्रेषणीयम्। तदर्थम् आवश्यकं काष्ठम् अस्मिन् अरण्ये केवलं लभ्यते, न अन्यत्र कुत्रापि। अतः मया एषः वृक्षः च्छेदनीयः एव" इति।

तदा यक्षिणी कोपेन मुरारिं पश्यन्ती - "केवलायाः वीणायाः निर्माणार्थम् एषः एव वृक्षः आवश्यकः वा भवतः?" इति वदन्ती हस्तौ पुरतः प्रसारितवती।

अपरक्षणे एव यक्षिण्याः हस्तयोः अपूर्वा काचित् वीणा प्रत्यक्षा जाता। सा वीणा तत्र तत्र वज्रैः विविधैः मणिभिः च अलङ्कृता आसीत्।

मुरारिः साश्चर्यम् एतत् दृष्टवान्।

तदा यक्षिणी - "एषा अपूर्वा वीणा। ये सङ्गीतविषये स-रि-ग-मादीन् स्वरान् अपि वादयितुं न जानन्ति तादृशाः अपि एतां वीणां सुलभतया वादयितुं शक्नुवन्ति। भवान् एतस्याः वीणायाः पुरतः उपविश्य देवीं सरस्वतीं मनसा स्मरन्, भवदिष्टं रागं मनसा चिन्तयन् तन्त्रीः स्पृशति चेत् वीणा तेन रागेण गायति। किन्तु एतद्विषये किञ्चित्

जागरूकतया भाव्यम् । रागद्वयस्य विषये जागरूकता अपेक्षिता । भवान् मोहनरागेण वादयति चेत् तस्मिन् क्षणे मनसा इष्टा व्यक्तिः भवति प्रीतिमती भविष्यति । वरुणरागं वादयति चेत् अपरक्षणे एव महती वृष्टिः भवति । ततोऽपि प्रधानः स्मरणीयश्च अंशः – एषः सालवृक्षः यावत्पर्यन्तम् अत्र तिष्ठति तावत्पर्यन्तम् एव अहम् अत्र वसामि । यावत्पर्यन्तं मया अस्मिन् वृक्षे वासः क्रियते तावत्पर्यन्तम् एव एषा वीणा महिमवती भवति । ज्ञातं खलु ! स्वीकरोतु एतां वीणाम्'' इत्युक्त्वा मुरारये वीणां दत्त्वा अदृश्या जाता ।

एतत् सर्वं मुरारेः अनिरीक्षितम् आसीत् । अकस्मात् अपूर्वा वीणा प्राप्ता इत्यतः मुरारिः अतीव सन्तुष्टः । 'यदि अहम् इच्छामि तर्हि एतस्याः वीणायाः साहाय्येन राजकुमारीं चारुलताम् एव परिणयेयम्' इति चिन्तनं मुरारेः ।

एवं प्रकारेण कल्पनालोके विहरन्तं मुरारिं पार्श्वे स्थितः कर्मकरः जागरयन् – ''भोः स्वामिन् ! सूर्यः अस्तं गतः । अन्धकारः सर्वत्र प्रसरन् अस्ति । गृहं गच्छाव वा ?'' इति पृष्टवान् ।

कर्मकरस्य वचनेन वास्तवलोकम् आगतः मुरारिः उक्तवान् – ''आम्, गच्छाव । एकं विषयं सम्यक् स्मरतु भवान् । एतस्याः अपूर्ववीणायाः विषयः ग्रामे कस्यापि समीपे न वक्तव्यः भवता'' इति ।

कर्मकरः एतत् अङ्गीकृतवान् । उभौ अपि गृहं गतवन्तौ ।

कर्मकरः यद्यपि मुरारिम् उक्तवान्





आसीत् यत् अपूर्ववीणाविषयं ग्रामे कमपि न वदामि इति। किन्तु सः गृहं गत्वा वीणाविषये पत्नीम् उक्तवान् । 'एतत् रहस्यं कस्यापि समीपे न वक्तव्यं भवत्या' इत्यपि पत्नीं बोधितवान् कर्मकरः । किन्तु तस्य पत्नी एतत् रहस्यं कमपि मा वदतु इति वदन्ती बहून् एतं विषयम् उक्तवती । एवं तद्ग्रामीणाः सर्वे जनाः ज्ञातवन्तः अपूर्ववीणाविषयम् ।

अनन्तरदिने प्रातः मुरारिः उत्थाय पश्यति - गृहस्य् पुरतः बहवः जनाः सम्मिलिताः सन्ति । किमर्थम् एतावन्तः जनाः आगताः स्युः इति क्षणकालं चिन्तितवान् मुरारिः अनुक्षणं स्मृतवान् वीणाप्राप्तिविषयम् । जनाः मुरारिं साग्रहम् उक्तवन्तः - 'वीणां वादयतु' इति ।

किन्तु एतादृशमूढविषयेषु विश्वासरहितः कश्चित् युवकः अग्रे आगत्य मुरारिम् - "किं भोः मुरारे ! अपूर्वां वीणां प्राप्तवान् अस्ति भवान् । तस्याः वीणायाः साहाय्येन राजकुमारीं चारुलताम् एव परिणेतुम् अर्हति भवान् । तेन एतस्य देशस्य राजा भवितुम् अवकाशः अस्ति" इति तिरस्कारपूर्वकम् उक्तवान् ।

युवकस्य एतानि तिरस्कारपूर्णानि वचनानि श्रुत्वा मुरारिः कुपितः । युवकेन यत् उक्तं तत् सत्यम् एव भवतु इति हठेन मुरारिः गृहस्य अन्तः गत्वा यक्षिणीतः प्राप्तां वीणाम् आनीतवान् । गृहस्य पुरतः पद्मासनस्थितौ उपविश्य वाग्देवीं सरस्वतीं मनसा प्रार्थितवान् ।

अनन्तरं मुरारिः 'राजकुमारी चारुलता माम् इच्छतु' इति चिन्तयन् रागं मनसा स्मरन् वादयितुम् आरब्धवान् । जनाः श्रद्धया महता सन्तोषेण च मुरारेः वीणावादनं श्रुतवन्तः ।

किन्तु अकस्मात् तत्रत्यं वातावरणं परिवृत्तम् । आकाशः कृष्णवर्णीयैः मेघैः आवृतः । अपरक्षणे एव मेघगर्जनं, महाशनिश्च उत्पन्नम् । एतेन जनाः दिग्भ्रान्ताः । मुरारिः अपि भीतः । तत्क्षणं तेन ज्ञातः स्वदोषः ।

मुरारिः मोहनरागं न स्मृतवान् आसीत्, अपि तु वरुणरागं मनसा स्मृत्वा ताम् अपूर्वां वीणां वादितवान् आसीत् । तस्मात् एव

कारणात् महती वृष्टिः आरब्धा । किन्तु इदानीं चिन्तया किं प्रयोजनम् ? मेघास्तु धाराकारेण वर्षन्ति ।

'अस्मिन् ग्रीष्मकाले अपि किमर्थम् एवं महती वृष्टिः !' इति वदन्तः जनाः स्वस्वगृहं प्रति धावितवन्तः ।

तावता आकाशे भीकरी काचित् महती तडित् दृष्टा । क्षणपरक्षणे दूरतः कुतश्चित् अशनिपातशब्दः श्रुतः । मुरारिः किमपि चिन्तयन् आसीत् । तस्य हस्तयोः कस्यचित् मृदुवस्तुनः स्पर्शः जातः । तदा मुरारिः दृष्टवान् । वीणायाः स्थाने महान् सर्पः आसीत् ।

एतत् दृष्ट्वा भीतः मुरारिः उच्चैः क्रन्दनं कुर्वन् उत्थितवान् । सर्पः एकवारं मुरारिं दृष्ट्वा ततः वेगेन आकाशदिशि गच्छन् आकाशे लीनः जातः ।

एतादृशं कोलाहलं श्रुत्वा बहिः आगतवान् मुरारेः पिता मुकुन्दः । सः पुत्रं पृष्टवान् - "कः कोलाहलः ?" इति । पुत्रः प्रवृत्तं सर्वं निवेदितवान् ।

तदा मुकुन्दः पुत्रं - "मुरारे ! भवतः व्यवहारः अस्माकं वृत्तिधर्मस्य एव अपमानकरः । एतस्मात् अनुभवात् वा विवेकं प्राप्नोतु भवान् । अत्याशां मा करोतु । अत्याशा कृता चेत् जनाः भवन्तं दृष्ट्वा उपहसन्ति । विनायासं फलं प्राप्तुं कदापि इच्छा न करणीया । विनायासं किमपि अपूर्वं वस्तु प्राप्तं चेदपि तत् न स्वीकरणीयम् । अस्तु तावत्, गतं तु गतम् एव । अद्य एव अरण्यं गत्वा उत्तमसालवृक्षतः काष्ठं सङ्गृह्य आगच्छतु । तेन काष्ठेन उत्तमां वीणां निर्माय राजकुमार्यै चारुलतायै ददातु" इति बोधितवान् ।

अनन्तरं मुरारिः काष्ठसङ्ग्रहणार्थं रजतपर्वतं गतवान् । तत्र यक्षिण्याः वासः यस्मिन् वृक्षे आसीत् सः सालवृक्षः अशनिना दग्धः आसीत् ।

अनन्तरं मुरारिः महता कष्टेन पर्वते बहुत्र अन्विष्य सालवृक्षस्य काष्ठं सम्पाद्य मासाभ्यन्तरे वीणां निर्माय राजकुमार्यै चारुलतायै दत्तवान् ।



# वीराधिवीरः

मगधस्य राजा श्रुतकीर्तिः कदाचित् हेमपुरराज्यस्य उपरि आक्रमणं कृतवान् । किन्तु युद्धे पराजितः सः पलायितः ।

हेमपुरराज्यस्य राजा स्वकीयस्य विजयस्य कारणीभूतान् सैनिकान् अधिकारिणः च बहुप्रकारैः सत्कृतवान् ।

विजयनामकः कश्चित् सैनिकः रणरङ्गे वीरावेशेन युद्धं कुर्वन् प्रतिस्पर्धिनां बहूनां सैनिकानां हस्तौ पादौ च कर्तितवान् इति सर्वत्र प्रचारः आसीत् । एतत् श्रुत्वा तद्ग्रामीणाः जनाः विजयं पुष्पमालाभिः अलङ्कृत्य वीथ्यां शोभायात्राम् आरब्धवन्तः । विजयः ग्रामीणानाम् एतादृशं सत्कारं महता आनन्देन अनुभवन् आसीत् ।

तदा जनसमूहतः कश्चित् अग्रे गत्वा विजयं पृष्टवान् - ''विजय ! भवान् युद्धे शत्रूणां शिरश्छेदनम् अकृत्वा हस्तपादच्छेदनं किमर्थं कृतवान् ?'' इति ।

तदा विजयः क्षणकालं किमपि चिन्तयन् इव मौनं स्थितवान् । अनन्तरम् उक्तवान् - ''तादृशः अवकाशः मया न प्राप्तः । यतः तेषां शिरांसि पूर्वमेव छिन्नानि आसन्'' इति ।





# विचित्रं पुष्पम्

११

(नागपुर्याः राजा निर्णीतवान् यत् दलनायकस्य नागसिंहस्य नेतृत्वे केचन सैनिकाः उत्तुङ्गस्य साहाय्यार्थं प्रेषणीयाः इति । सेनाधिपतिः उत्तुङ्गम् आहूय तस्मिन् एव दिने राज्यस्य सीमाप्रदेशात् आगतं नागसिंहं परिचायितवान् । स्वगृहे स्थितानि शताब्दिकापुष्पाणि अदृश्यतां गतानि इत्यतः दिग्भ्रान्तः कौभवः राजधानीम् आगतवान् । तत्र तेन ज्ञातं यत् राजधान्याम् अपि शताब्दिकापुष्पाणि अदृश्यतां गतानि सन्ति इति । ततः राजादयः अग्रे करणीयस्य विषये समालोचनं कृतवन्तः । तदनन्तरम् .....)

"शताब्दिकापुष्पाणि भवतः गृहे सन्ति इति उत्तुङ्गः नागसिंहम् उक्तवान् अस्ति । अतः तानि पुष्पाणि नागसिंहः एव अपहृतवान् स्यात् किल !" इति सेनाधिपतिः कौभवं पृष्टवान् ।

कौभवः क्षणकालं विचिन्त्य उक्तवान् - "नागसिंहः किमपि कुतन्त्रं कुर्यात् नाम । एतानि शताब्दिकापुष्पाणि कथं तस्य प्रयोजनाय भवेयुः इति न ज्ञायते" इति ।

तदा सेनाधिपतिः उक्तवान् - "भवतः चिन्तनं समीचीनम् एव । किन्तु इदानीं पुष्पाणां प्राप्तिपर्यन्तम् उत्तुङ्गस्य प्रयाणं न भवति । अतः तावत्पर्यन्तं भवान् राजधान्याम् एव तिष्ठति चेत् वरम्" इति ।

"तथैव भवतु" इत्युक्त्वा कौभवः ततः उत्तुङ्गस्य वासस्थानं प्रति गतवान् । तत्र उभौ



अपि शताब्दिकापुष्पाणां विषये एव बहुकालं चर्चां कृतवन्तौ ।

अनन्तरदिने मध्याह्नसमये कश्चित् सैनिकः आगत्य - "कौभववर्य ! उभे युवती आगते । ते भवन्तं द्रष्टुम् इच्छतः" इति उक्तवान् ।

एतत् श्रुत्वा कौभवः प्रकोष्ठात् बहिः आगत्य दृष्टवान् । उभयोः अन्यतरा कौभवस्य पुत्री चित्रा । सः पुत्रीं सोद्वेगं पृष्टवान् - "वत्से ! इदानीं किमर्थम् अत्र आगतवती भवती ? भवत्याः माता कुशलिनी खलु !" इति ।

तदा पुत्री चित्रा उक्तवती - "तात ! अम्बा कुशलिनी एव । यानि पुष्पाणि अदृश्यतां गतानि आसन्, तानि लब्धानि" इति ।

"किम् ? शताब्दिकापुष्पाणि लब्धानि वा ? किमेतत् सत्यम् ?" इति आश्चर्येण पृष्टवान् कौभवः ।

तदा चित्रा उक्तवती - "आं, तात ! एतत् सत्यम् एव । अद्य प्रातः यथापूर्वम् अहं सखीभिः सह समुद्रतीरं गतवती । तत्र उत्तुङ्गस्य नौका अधोमुखं पतिता आसीत् । नौकासमीपे शताब्दिकापुष्पाणां गुच्छानि पतितानि आसन् । नौका समुद्रोन्मुखम् आकृष्टा इव दृश्यते तत्र । यतः सिकतासु तादृशचिह्नं दृश्यते । उत्तुङ्गः एव पलायनार्थं प्रयत्नं कृतवान् स्यात् इति चिन्तितं मया" इति ।

तावता उत्तुङ्गः तत्र आगतः ।

"उत्तुङ्गः रात्रौ अत्रैव आसीत् वत्से !" इत्युक्त्वा कौभवः पुत्रीं पृष्टवान् - "इदानीं तानि पुष्पाणि कुत्र सन्ति ?" इति ।

तदा चित्रा उक्तवती - "शताब्दिका-पुष्पाणि समुद्रतीरे नौकायाम् एव सन्ति । एषा सन्तोषकरी वार्ता भवते निवेदनीया इत्येव अहं सख्या सह अत्र आगतवती" इति ।

एतत् श्रुत्वा कौभवः वात्सल्येन पुत्र्याः स्कन्धयोः उपरि हस्तं संस्थाप्य - "महान् सन्तोषः वत्से ! भवत्यौ अत्रैव तिष्ठताम् । अहम् उत्तुङ्गेन सह गत्वा एतं विषयं सेनाधिपतिं निवेद्य आगच्छामि" इत्युक्त्वा- "आगच्छतु उत्तुङ्ग ! गच्छाव" इति वदन् अग्रे गतवान् । उत्तुङ्गः तम् अनुसृतवान् ।

उत्तुङ्गः गच्छन् मार्गे कौभवं पृष्टवान् - "कौभव ! शताब्दिकापुष्पाणि लब्धानि वा ?



भवतः पुत्री किम् उक्तवती ?'' इति ।

कौभवः पुत्र्या चित्रया उक्तं सर्वम् उत्तुङ्ग निवेदितवान् । शताब्दिकापुष्पाणि लब्धानि इति ज्ञात्वा उत्तुङ्गः अतीव सन्तुष्टः । 'तानि शताब्दिकापुष्पाणि स्वीकृत्य स्वनौकया गन्तुं कः प्रयत्नं कृतवान् स्यात् ? तस्य उद्देशश्च कः स्यात् ?' इत्येवंप्रकारेण चिन्तयन्तौ उत्तुङ्ग-कौभवौ सेनाधिपतिभवनं प्राप्तवन्तौ ।

तौ दृष्ट्वा सेनाधिपतिः पृष्टवान् - ''किं प्रवृत्तम् ? कः विशेषः ?'' इति ।

कौभवः - 'शताब्दिकापुष्पाणि लब्धानि' इति विषयं निवेदितवान् ।

तदा ''साधु । साधु । एतां शुभवार्तां कः आनीतवान् ?'' इति पृष्टवान् सेनाधिपतिः ।

''मम पुत्री चित्रा आगत्य एतां वार्तां निवेदितवती प्रभो !'' इति उक्त्वा प्रवृत्तं विषयं विस्तरेण उक्तवान् कौभवः ।

तदा सेनाधिपतिः - ''महान् सन्तोषः । शताब्दिकापुष्पाणां रक्षणार्थम् इदानीम् एव काश्चन सैनिकान् प्रेषयामि । प्रथमं महाराजम् एतं विषयं निवेदयाम । आगच्छतु, गच्छाम'' इति वदन् ततः प्रस्थितवान् ।

कौभवः उत्तुङ्गश्च सेनाधिपतिम् अनुसृतवन्तौ ।

शताब्दिकापुष्पाणि लब्धानि इति ज्ञात्वा राजा अतीव सन्तुष्टः । सः कौभवम् - ''महान् सन्तोषः । इतःपरं तानि पुष्पाणि राक्षसमृगसमीपं प्रापयितुं किञ्चिदपि विलम्बः न करणीयः'' इति उक्त्वा उत्तुङ्गं पृष्टवान् - ''भवान् कदा प्रस्थानं करिष्यति ?'' इति ।

तदा ''यदि भवान् अनुज्ञां ददाति तर्हि इदानीम् एव सिद्धः अस्मि अहम्'' इति उक्तवान् उत्तुङ्गः ।

एतत् श्रुत्वा राजा - ''साधु ! उत्तुङ्ग साधु !'' इति वदन् प्रीत्या उत्तुङ्गस्य स्कन्धयोः उपरि हस्तं संस्थाप्य - ''भवादृशाः वीराः एव राज्यस्य आधारभूताः । प्रयाणात् प्रत्यागमनसमये अवश्यम् अत्र आगत्य गच्छतु'' इति उक्तवान् ।

अनन्तरं राजा सेनाधिपतिम् उक्तवान् - ''अद्य एव उत्तुङ्गस्य प्रयाणार्थं सिद्धतां करोतु । शताब्दिकापुष्पाणि प्राप्तानि इति विषयं मल्लिका निवेदयामि अहम्'' इति ।

अनन्तरं सेनाधिपतिः नागसिंहस्य आनयनार्थं कञ्चित् भटं प्रेषितवान् ।

किञ्चित्कालानन्तरं दलनायकः नागसिंहः तत्र आगतवान् । कौभवः सेनाधिपतिः उत्तुङ्गः च एकत्रैव सम्मिलिताः इति ज्ञात्वा क्षणकालं विचलितः सः । तथापि अनुक्षणम् आत्मानं निगृह्य सः सेनाधिपतिं नमस्कृतवान् ।

तदा सेनाधिपतिः नागसिंहम् उक्तवान् - "अद्य एव उत्तुङ्गस्य प्रयाणम् । सैनिकैः सहितेन भवता उत्तुङ्गस्य रक्षणार्थं गन्तव्यम् । एषा राजाज्ञा" इति ।

"अद्य एव वा ? शताब्दिकापुष्पाणि लब्धानि वा सेनाधिपतिमहोदय ?" इति साश्चर्यं पृष्टवान् नागसिंहः ।

तदा सेनाधिपतिः - "शताब्दिका-पुष्पाणां विषये भवतः किमर्थं चिन्ता ?" इति कठोरस्वरेण पृष्टवान् ।

सेनाधिपतिः एव पुनः उक्तवान् - "शताब्दिकापुष्पाणि राक्षसमृगसमीपं प्रापयितुम् एव एतत् प्रयाणम् । अद्य सायं भवान् समुद्रतीरं गच्छतु । तत्र शिलानां मध्ये यः लघुमार्गः अस्ति, तेन मार्गेण नौकाद्वारा समुद्रं गच्छतु । नौकाद्वयेन अस्माकं सैनिकाः भवन्तम् अनुसरन्ति । अवशिष्टविषयान् उत्तुङ्गः चिन्तयति" इति ।

"किन्तु ...... पुष्पाणि ......" इति किमपि वक्तुम् उद्युक्तः नागसिंहः मौनं स्थितवान् ।

तदा सेनाधिपतिः - "सर्वं सिद्धम् अस्ति इति मया उक्तं खलु ! भवतः प्रस्थानसिद्धता एव अवशिष्टा अस्ति इदानीम्" इति उक्तवान् ।



"तथैव भवतु" इति उक्त्वा नागसिंहः ततः वेगेन गतवान् ।

अनन्तरं सेनाधिपतिः उत्तुङ्गम् उक्तवान् - "पुष्पाणि कथम् अदृश्यतां गतानि इति विषयं नागसिंहः जानीयात् एव । तथापि विचारणार्थम् एषः समयः न उचितः । सः एकाकी सन् राक्षसमृगं सम्मुखीकर्तुं सर्वथा न शक्नोति । अतः नागसिंहकारणतः भवतः क्लेशः न भवेत् इति चिन्तयामि । तथापि तस्य विषये जागरूकतया व्यवहरतु भवान्" इति ।



उत्तुङ्गः एतत् अङ्गीकृतवान्।

अनन्तरं सेनाधिपतिः कौभवम् उक्तवान् - ''भवान् समुद्रतीरपर्यन्तम् उत्तुङ्गं प्रापयतु'' इति।

कौभवः एतत् अङ्गीकृतवान्।

अनन्तरं कौभवः उत्तुङ्गेन सह तस्य वासस्थानं गतवान्। तत्र एतौ एव प्रतीक्षमाणा आसीत् चित्रा। कौभवः प्रवृत्तं सर्वं चित्राम् उक्तवान्।

किञ्चित्कालानन्तरं दलनायकः नागसिंहः तत्र आगतवान्। ततः सर्वे अपि समुद्रतीरं प्रति प्रस्थिताः। नागसिंहः मौनम् आसीत्। तस्य मुखे वेदना, निरुत्साहः च दृश्येते स्म।

सैनिकाः पूर्वमेव समुद्रतीरं प्राप्तवन्तः आसन्। सैनिकाः नागसिंहादीन् दृष्ट्वा दूरतः एव तं नमस्कृतवन्तः। तत्र नौकात्रयं सिद्धम् आसीत्। एकस्यां नौकायां शताब्दिका-पुष्पाणि आसन्। सद्यः एव विकसितानि पुष्पाणि इव तानि कान्तियुतानि सुगन्धयुक्तानि च आसन्। यस्यां नौकायां शताब्दिकापुष्पाणि आसन् सा नौका मदीया एव इति अभिज्ञातवान् उत्तुङ्गः। सः स्वकटिप्रदेशे बद्धं शताब्दिकापुष्पाणां सस्यगुच्छमेकं चित्रायै यच्छन् 'एतानि सस्यानि गृहस्य उद्याने आरोपयतु' इति अभिनयद्वारा तां सूचितवान्।

तानि सस्यानि स्वीकृत्य चित्रा दीनवदना उत्तुङ्गं दृष्टवती।

शताब्दिकापुष्पाणां दर्शनेन नागसिंहस्य उत्साहः प्रवृद्धः। उत्तुङ्गः वृथा किमर्थं विलम्बम् आचरति इति भावेन तं दृष्टवान् नागसिंहः। एतत् जानन् कौभवः - ''उत्तुङ्ग! अन्धकारप्रसितः पूर्वं प्रस्थानम् उचितम्। अलं विलम्बेन। मया उक्तं मा विस्मरतु। भवतः प्रत्यागमनम् एव प्रतीक्षमाणाः भविष्यामः वयम्'' इति उक्तवान्।

उत्तुङ्गः कौभवं नमस्कृत्य नौकासमीपं गतवान्। पूर्वमेव नागसिंहः तस्यां नौकायाम् उपविष्टवान् आसीत्। उत्तुङ्गः अपि ताम् नौकाम् आरुह्य उपविश्य नौकां चालयितुम् आरब्धवान्। सैनिकनौकाद्वयम् अपि उत्तुङ्गनौकाम् अन्वसरत्।

सूर्यास्तसमयः। मध्यरात्रसमये समुद्रस्य

मध्यभागः प्राप्तव्यः इति उद्देशेन उत्तुङ्गः महता वेगेन नौकां चालयति । पृष्ठभागतः सैनिकनौके अपि अनुसरन्त्यौ स्तः ।

तदा - "एतानि पुष्पाणि राक्षसमृगसमीपं प्रापितानि चेत् एव सः राक्षसमृगः पुनः माणिक्यपुरीं न आगमिष्यति इति भवान् कथं जानाति ?" इति कठोरस्वरेण पृष्टवान् नागसिंहः ।

एतत् श्रुत्वा उत्तुङ्गः नागसिंहं दृष्टवान् । नागसिंहस्य मुखं क्रोधाविष्टम् आसीत् । तदा उत्तुङ्गः उक्तवान् - "एतेभ्यः पुष्पेभ्यः आकृष्टः राक्षसमृगः माणिक्यपुरीम् आगतवान् । इदानीं माणिक्यपुर्यां एकम् अपि शताब्दिकापुष्पं यथा न भवेत् तथा व्यवस्था कृता अस्ति अस्माभिः । सर्वाणि अपि पुष्पाणि मया गुच्छरूपेण अत्र आनीतानि । एतादृशानां पुष्पाणां विकसनं शते वर्षेषु एकवारम् एव । अतः शतं वर्षाणि यावत् माणिक्यपुरीं प्रति राक्षसमृगस्य आगमनसम्भवः नास्ति इति ज्येष्ठाः उक्तवन्तः । तदर्थम् एषः यत्नः" इति ।

तदा नागसिंहः - "तर्हि एतानि पुष्पाणि प्रदर्श्य राक्षसमृगेन सह वाणिज्यं कर्तुं शक्यते खलु !" इति पृष्टवान् ।

एतत् श्रुत्वा उत्तुङ्गः आश्चर्येण पृष्टवान् - "राक्षसमृगेण सह वाणिज्यं वा ? भवतः कथनस्य आशयः कः ? राक्षसमृगेण सह सम्भाषणं शक्यं वा ? सः किं मानवभाषां जानाति ? अन्यच्च राक्षसमृगेण सह भवतः किं कार्यम् ?" इति ।



तदा नागसिंहः - "प्रमुखं कार्यम् एव अस्ति । राजभवनं, तत्र विद्यमानाः महाराजः, राज्ञी, युवराज्ञी इत्यादयः च भूमिसात् भवेयुः । तदर्थम् अहं राक्षसमृगस्य साहाय्यम् इच्छामि" इति उक्तवान् ।

एतत् श्रुतवतः उत्तुङ्गस्य मनसि तु भावना आगता यत् अपरेण भयङ्करमृगेण सह वार्तालापं कुर्वन् अस्मि अहम् इति । राक्षसमृगः शताब्दिकापुष्पाणां निमित्तं भयङ्करं वातावरणं सृष्टवान् आसीत्, किन्तु स्वार्थी नागसिंहः राक्षसमृगस्य अपेक्षया क्रूरः इव भासते ।

एतेन चकितः उत्तुङ्गः पृष्टवान् - "महाराजपरिवारजनाः अतीव सज्जनाः, भवतः बान्धवाः च । तादृशाः किमर्थं

नाशनीयाः ?" इति।

तदा नागसिंहः - "अहं नागपुर्याः राजा भवितुम् इच्छामि । एतन्निमित्तं मया यः प्रयत्नः क्रियते, तत्र यः कोऽपि विघ्नम् आचरति चेत् अपि सः यमलोकं गमिष्यति । मम सहोदराः, बान्धवाः आत्मीयाः इति न काऽपि चिन्ता मम। यदि भवान् अपि मम कार्ये विघ्नं कुर्यात् तर्हि भवन्तम् अपि मारयेयम्" इति उक्तवान् कोपेन।

नागसिंहस्य वचनं श्रुत्वा उत्तुङ्गः - "मां मारयति वा ? माणिक्यपुरीतः आनीतानि पुष्पाणि भवतः उपयोगार्थं न ददामि अहम्। शताब्दिकापुष्पाणां कारणतः राजकुटुम्बस्य सर्वनाशं सर्वथा न इच्छामि" इति उक्तवान् दृढस्वरेण।

"भवान् जीवति चेदेव खलु अन्यत्सर्वम्" इति वदन् नागसिंहः दण्डेन उत्तुङ्गं जले पातितवान्। उत्तुङ्गः उन्मुखं जले पतितवान्।

नागसिंहः क्षणकालं समुद्रं परीक्षादृष्ट्या दृष्टवान् । उत्तुङ्गः कुत्रापि दृष्टिगोचरः न जातः। 'उत्तुङ्गः मरणं प्राप्तवान् इत्यत्र नास्ति सन्देहः' इति निश्चित्य नागसिंहः स्वनौकां सैनिकनौकासमीपं नीतवान् । यदा सैनिकनौका आसन्ना तदा शताब्दिका-पुष्पाणि तस्याम् आरोप्य स्वयं च तस्याम् उपविश्य अग्रे प्रस्थितवान् सः।

किञ्चित्कालं यावत् समुद्रजले निमग्नः एव उत्तुङ्गः अग्रे गतवान् । ततः शरीरम् उपरि आनीतवान् । परितः अन्धकारः आसीत्। समीपे कोऽपि न दृश्यते स्म। तरणं कुर्वतः उत्तुङ्गस्य हस्तः केनचित् घट्टितः अभवत्। उत्तुङ्गः तत् वस्तु गृहीतवान्। सा च काचित् रिक्ता नौका। महता प्रयत्नेन तां नौकां गृहीत्वा आरुह्य अन्तः उपविष्टवान् सः । अदृष्टवशात् तस्यां नौकाचालनदण्डः अपि आसीत्। उपवेशनेन किञ्चित् विश्रान्तिं प्राप्तवान् सः परितः दृष्टिं प्रसारितवान् । अनतिदूरे एव तेन कश्चन द्वीपः दृष्टः । 'शताब्दिकापुष्पैः विना राक्षसमृगम् अन्विष्य गमनेन न किमपि प्रयोजनम्' इति आलोच्य उत्तुङ्गः द्वीपं लक्ष्यीकृत्य नौकां चालितवान्। - (अनुवर्तते)





# परोत्कर्षासहिष्णुता

भगवता वेतालवहनार्थम् एव सृष्टः इव स्थितः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! मध्यरात्रसमये घोरे श्मशानमार्गे एवं सञ्चरन् भवान् किं साधयितुम् इच्छति इत्येव न ज्ञायते मया । अन्यच्च भवता साधयितुम् इष्टं कार्यं स्वनिमित्तम् उत परनिमित्तम् इत्यपि न ज्ञायते मया । यतः कदाचित् महात्मानः अपि अल्पस्य जनस्य निमित्तं महान्तं त्यागं कृतवन्तः दृश्यन्ते । भवान् तु तादृशः न स्यात् खलु ? पूर्वं रङ्गनाथः नाम कश्चित् तादृशः आसीत् । तस्य कथा श्रावयामि । तेन कृतम् उचितं वा न वा इति भवान् एव निर्णयतु'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

रामपुरनामके ग्रामे पूर्वं रङ्गनाथः नाम

## वेतालकथा



कश्चन भूस्वामी आसीत् । सः प्रतिदिनं ग्रामीणान् मेलयित्वा वार्ताः निवेदयति स्म, कथाः श्रावयति स्म च । भूस्वामिना श्राव्यमाणाः कथाः वार्ताः च मनः रञ्जयन्ति स्म इत्यतः ग्रामीणाः बहवः सायङ्कालसमये भूस्वामिनः गृहस्य पुरतः उपस्थिताः भवन्ति स्म ।

रङ्गनाथः न उदारः । स्वयं तु दानं न करोति स्म सः । अन्यैः क्रियमाणं दानम् अपि सः न सहते स्म । ''सर्वे स्वकर्मणः अनुगुणं कष्टं सुखं वा प्राप्नुवन्ति । यदि कष्टे पतितस्य साहाय्यं क्रियेत तर्हि भगवतः इच्छायाः विरुद्धं व्यवहारः स्यात् । अतः परोपकारः दानं वा न करणीयम्'' इति ग्रामीणान् बोधयति स्म रङ्गनाथः । एतस्य परिणामतः ग्रामीणेषु उपकारबुद्धिः नितरां क्षीणा जाता ।

कदाचित् कश्चन संन्यासी तं ग्रामम् आगतवान् । सः जनान् बहुधा बोधितवान् – ''परोपकारार्थं जीवनेन एव सार्थक्यम् । स्वनिमित्तं पशवः अपि जीवन्ति । किं तेन ? परोपकारः इहलोके परलोके च हितकारी'' इति । एतां नीतिं सः विविधाः कथाः उदाहृत्य सम्यक् बोधितवान् ।

तस्य बोधनस्य कारणतः जनानां मनस्सु परिवर्तनं जातम् । 'पुण्यकार्यं करणीयम्' इति बहवः निर्णीतवन्तः ।

तस्मिन् ग्रामे वीरवरः नाम कश्चन पङ्गुः तरुणः आसीत् । बाल्ये गृहस्य पतनात् पङ्गुत्वं प्राप्तवान् आसीत्, मातापितृभ्यां विहीनः जातः आसीत् अपि । अनन्यगतिकतया सः भिक्षायाचनं कुर्वन् आसीत् । तस्य दूरबन्धुः धर्मराजः निर्णीतवान् यत् अहं वीरवरं स्वगृहम् आनीय पोषयिष्यामि, ततः किञ्चित् पुण्यं सम्पादयिष्यामि इति । स्वस्य एतं विचारं सः रङ्गनाथं निवेदितवान् ।

तदा रङ्गनाथः उक्तवान् – ''यदि भवान् वीरवरं गृहं नीत्वा पोषयेत् तर्हि सः अलसः भवेत् । सः परावलम्बी यथा न स्यात् तथा किमपि करणीयम् अस्माभिः । अतः तं मम गृहं प्रेषयतु । वेणुभिः कण्डोल-कटादीनां निर्माणम् अहं तं बोधयिष्यामि । अस्मद्ग्रामीणाः जनाः सर्वे वेणुनिर्मितानि वस्तूनि ततः एव क्रीणीयुः । ततोऽपि अधिकतया शिष्टानि वस्तूनि नगरे विक्रेतुं

व्यवस्थाम् अहं करिष्यामि'' इति।

धर्मराजः एतत् वचनम् अङ्गीकृत्य तदनुगुणं व्यवस्थाम् अपि कृतवान्। रङ्गनाथस्य पत्नी पङ्गुं वीरवरं पोषयितुम् अनिच्छन्ती असन्तोषं प्रकटितवती। तदा रङ्गनाथः पत्नीम् उक्तवान् – ''अये! वेणुभिः निर्मितानां वस्तूनां विक्रयणेन प्रभूतं धनं सम्पाद्यते। ग्रामीणाः सर्वे वीरवरात् एव वस्तूनि क्रीणन्ति इत्यतः विक्रयणसमस्या तु अस्माकं नास्ति। आयः यः भवति सः अस्माकम् एव। वीरवराय प्रतिदिनं भोजनं, प्रतिमासं किञ्चित् धनं च दत्तं चेदपि अस्माकं न काऽपि हानिः'' इति।

पत्युः वचनं श्रुत्वा पत्नी सन्तुष्टा। अतः वीरवरस्य पोषणं सा अङ्गीकृतवती। एतेन रङ्गनाथः कीर्तिं प्राप्तवान्।

सुधीरः नाम अन्यः तद्ग्रामवासी सङ्कल्पितवान् यत् ग्रामे वेङ्कटेश्वरमन्दिरं निर्मातव्यम् इति। एतत् ज्ञात्वा रङ्गनाथः तं बोधितवान् – ''ग्रामे इदानीम् एव राममन्दिरम् अस्ति। तच्च शिथिलम् अस्ति। तस्य उद्धारः एव वरं खलु? वेङ्कटेश्वरः रामः च महाविष्णोः एव अंशभूतौ। अतः भवत्समीपे यत् धनम् अस्ति तत् राममन्दिरस्य उद्धारार्थम् एव व्ययितं भवतु। राममन्दिरस्य आवरणे वेङ्कटेश्वरस्य लघुमन्दिरम् अपि निर्मापयामि। मन्दिरं सम्यक् अस्ति चेत् भक्ताः आगमिष्यन्ति। भक्ताः आगच्छन्ति चेदेव मन्दिरस्य शोभा'' इति।

सुधीरः एतत् अङ्गीकृतवान्। ततः राममन्दिरस्य उद्धारः जातः। तस्य मन्दिरस्य





व्यवस्थापकः रङ्गनाथः एव । मन्दिरस्य उद्धारतः भक्तानां गमनागमनम् अधिकं जातम् । रङ्गनाथस्य प्रसिद्धिः अपि प्रवृद्धा । भक्तानाम् आगमनतः रङ्गनाथस्य आयः अपि प्रवृद्धः ।

तस्य ग्रामस्य नन्दकुमारः सङ्कल्पं कृतवान् यत् नगरस्थं विद्यालयं प्रति ये गमनागमनं कुर्वन्ति तेषां साहाय्यार्थं शकटद्वयं व्यवस्थापयामि इति । एतत् ज्ञात्वा रङ्गनाथः उक्तवान् यत् ग्रामे एव शालायाः आरम्भं करवाम इति । रङ्गनाथस्य नेतृत्वे सार्वजनिकभूमौ शाला निर्मिता । एतदर्थं ग्रामीणाः सर्वे धनं दत्तवन्तः । नगरवासी निरुद्योगी कश्चन रङ्गनाथस्य बन्धुः एतस्य विद्यालयस्य शिक्षकत्वेन नियुक्तः । व्ययः यावान् भवति ततोऽपि अधिकं शुल्करूपेण प्राप्यते स्म । अतः विद्यालयव्यवहारतः अपि रङ्गनाथस्य आयः प्रवृद्धः ।

सीतापतिः नाम कश्चित् उक्तवान् यत् विद्यालयस्य सर्वेभ्यः बालकेभ्यः पाठ्यपुस्तकानि निश्शुल्कं ददामि इति । अन्यः कश्चित् उक्तवान् यत् बालकेभ्यः मध्याह्नभोजनम् अहं व्यवस्थापयामि इति । एतदुभयं श्रुत्वा रङ्गनाथः उक्तवान् - "निश्शुल्कं यत् दीयते तत् आलस्यं वर्धयति, परावलम्बनं पाठयति च । अतः बालकेभ्यः निश्शुल्कं किमपि न दातव्यम् । शालां परितः विशालं स्थलम् अस्ति । तत्र बालाः परिश्रमेण शाकानि वर्धयन्तु । तेन विद्यालयस्य आयः वर्धते । तेन धनेन पाठ्यपुस्तकानि वयं क्रीत्वा दद्मः, मध्याह्नभोजनम् अपि व्यवस्थापयाम । विशेषसन्दर्भेषु साहाय्यम् आवश्यकं चेत् ग्रामीणाः विद्यालयस्य निर्धनकुलोत्पन्नान् बालान् आह्वयन्तु । तेन बालानां शिक्षणे साहाय्यं स्यात् । बालैः स्वस्य बाल्ये एव परिश्रमशीलता अभ्यस्तव्या । तादृशस्य शिक्षणस्य दानम् अपि अस्माकं कर्तव्यम्" इति ।

एवं विद्यालयस्य बालाः अपि रङ्गनाथस्य आयस्य वृद्धेः कारणं जाताः । एतादृशैः व्यवहारैः रङ्गनाथस्य आयः प्रवृद्धः । कीर्तिः अपि प्रवृद्धा ।

कदाचित् हरिपुरतः अम्बरीषः नाम कश्चित् रामपुरम् आगतवान् । सः

ग्रामज्येष्ठान् दृष्ट्वा उक्तवान् - "मम प्रभूता सम्पत्तिः अस्ति । विशाला भूमिः अपि अस्ति । मम अपत्यं नास्ति । अतः समग्रा सम्पत्तिः निर्धनेभ्यः दातव्या इति मम इच्छा । भवन्तः एतद्ग्रामीणान् सर्वान् निर्धनान् मेलयन्तु । तत्तद्योग्यतानुगुणम् अहं भूमिं ददामि । यः कृषिकार्ये असमर्थः तस्मै धनं ददामि" इति ।

ग्रामज्येष्ठाः सन्तोषं प्रकटयन्तः रङ्गनाथसमीपं गत्वा विषयं निवेदितवन्तः । तदा रङ्गनाथः अम्बरीषं कोपेन पश्यन् उक्तवान् - "अस्माकं ग्रामे दानं स्वीकर्तुम् अर्हः निर्धनः कोऽपि नास्ति । सर्वे परिश्रमेण एव जीवितुम् इच्छन्ति, न तु दानरूपेण प्राप्तेन धनादिना" इति ।

"रङ्गनाथवर्य ! भवतः कीर्तिः मया अपि श्रुता अस्ति । अतः भवते एव मदीयां सम्पत्तिं दास्यामि । भवान् एव यथायोग्यं वितरणं करोतु । सर्वं दत्त्वा अहं हिमालयं गमिष्यामि" इति विनयेन उक्तवान् अम्बरीषः ।

एतत् श्रुत्वा रङ्गनाथः पुनरपि क्रोधेन - "यदि भवान् हिमालयं गन्तुम् इच्छति तर्हि सम्पत्तिं राज्ञे अर्पयतु । 'मद्ग्रामीणाः सर्वे सदापि परिश्रमेण जीवेयुः, कदापि दानस्वीकरणार्थं हस्तं न प्रसारयेयुः' इति मम इच्छा । अतः अहम् अपि भवतः सम्पत्तिं न स्वीकरोमि । अद्यावधि सद्विनियोगं कमपि अकृत्वा भवान् सम्पत्तिं वर्धितवान् यत् तदेव भवतः अन्याय्यमार्गाश्रयणं द्योतयति । एतादृशस्य दानस्य स्वीकरणेन अहम् अपि पापभाग् भवेयम् । अतः सम्पत्तिं राज्ञे एव



अर्पयतु भवान् । प्रजापीडनात् प्राप्ता सम्पत्तिः प्रजाहिताय एव व्ययिता भवतु'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! रङ्गनाथः स्वार्थपरः अन्य-वृद्ध्यसहिष्णुः च इति तु सुस्पष्टम् । मन्दिरव्यवहारे, विद्यालयव्यवहारे, इतरत्र च एतत् स्फुटं दृश्यते । परहितव्याजेन सः स्वस्य आयं वर्धयति । एतादृशः सः अम्बरीषस्य प्रभूतायाः सम्पत्तेः स्वीकारं किमर्थं निराकृतवान् ? किं रङ्गनाथः अविवेकी ? अथवा रङ्गनाथस्य व्यवहारे अकस्मात् किमपि परिवर्तनं जातं स्यात् वा ? यदि तथा स्यात् तर्हि तत्र कारणं किं स्यात् ? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''रङ्गनाथस्य स्वार्थपरता अन्योत्कर्षासहिष्णुता च स्फुटा एव । तादृशः सः अम्बरीषस्य सम्पत्तेः स्वीकारं निराकृतवान् यत् तावन्मात्रेण न निर्णेतव्यं यत् रङ्गनाथे अपूर्वं परिवर्तनं जातम् इति । रङ्गनाथस्य जीवितोद्देशः कः इति सुसूक्ष्मं परिशीलनीयम् । यत्र स्वलाभस्य सम्भवः नास्ति तत्र न प्रवर्तते सः । स्वलाभं मनसि निधाय एव परोपकारे प्रवर्तते सः । 'स्वलाभचिन्तकः' इति अपख्यातिं प्राप्तुं सर्वथा न इच्छति सः । परोत्कर्षासहिष्णुता तु तस्य सहजः गुणः । अन्येषाम् उत्तमकार्येषु दोषं प्रदर्शयितुं सः विशेषतः प्रयतते । अम्बरीषस्य विषये अपि तथैव । अम्बरीषस्य सम्पत्तिः अन्यायार्जिता इति, राज्ञे दानेन एव पापक्षालनम् इति च सर्वेषां पुरतः वदन् रङ्गनाथः अम्बरीषविषये ग्रामे अनादरं जनितवान् । एवं रङ्गनाथः अम्बरीषस्य व्यवहारे दोषं प्रदर्शयितुम् एव सम्पत्तेः स्वीकारं निराकृतवान्, न तु मनःपरिवर्तनं प्राप्य'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# स्थालीपुलाकन्यायः

रङ्गनाथः कश्चन वणिक् । कृषिकेभ्यः धान्यानि क्रीत्वा नगरे महावणिग्भ्यः तेषां विक्रयणं कुर्वन् सः जीवनं यापयति स्म ।

तस्य पुत्रः सुन्दराङ्गः । सुन्दराङ्गः विद्याभ्यासे अनासक्तः आसीत् । पुत्रस्य एतादृशीं प्रवृत्तिं दृष्ट्वा रङ्गनाथः चिन्तितवान् यत् विद्याभ्यासे अनिपुणः एषः पुत्रः वाणिज्यव्यवहारे वा नियोजनीयः इति । 'यत्र यत्र अहं वाणिज्यार्थं गच्छामि तत्र सर्वत्र पुत्रं नयन् वाणिज्यतन्त्रं बोधयिष्यामि' इति निश्चितवान् सः ।

कदाचित् रङ्गनाथः पुत्रम् आहूय उक्तवान् - ''रामपुरनामके ग्रामे पूर्णचन्द्रः धान्यस्य विक्रयणं कर्तुम् इच्छति इति श्रुतम् । भवान् अद्य रामपुरं गत्वा धान्यं कीदृशम् इति ज्ञात्वा आगच्छतु । अनन्तरम् आवां मिलित्वा रामपुरं गत्वा मूल्यं निश्चित्य धान्यं क्रेष्यावः । एतेन क्रमेण भवता वाणिज्यतत्त्वं क्रमशः ज्ञातव्यम्'' इति ।

पितुः वचनस्य अनुगुणं गृहात् प्रातः एव प्रस्थितः सुन्दराङ्गः सायङ्कालस्य अनन्तरं गृहं प्रत्यागतवान् ।

रङ्गनाथः पुत्रं पृष्टवान् - ''किं भोः ! प्रत्यागमनार्थम् एतावान् विलम्बः किमर्थम् ?'' इति ।

तदा सुन्दराङ्गः उक्तवान् - ''सः पूर्णचन्द्रः शताधिकगोणीमितं धान्यं विक्रेतुम् इच्छति । एकैकशः गोणीम् उद्घाट्य धान्यपरीक्षणं कृतं मया । अतः प्रत्यागमने एतावान् विलम्बः'' इति ।

एतत् श्रुत्वा रङ्गनाथः हसन् - ''अये मूर्ख ! स्थालीपुलाकन्यायः भवता न श्रुतः वा ? स्थाल्यां स्थिताः पुलाकाः सर्वे न परीक्ष्यन्ते । द्वित्रान् पुलाकान् परीक्ष्य निर्णयः क्रियते यत् तण्डुलः पक्वः वा न वा इति ।

''अनामिकः''

एवम् एव धान्यपरीक्षा अपि । पञ्चषाणां गोणीनां धान्यं परीक्षितं चेत् समग्रस्य स्तरः ज्ञायते'' इति उक्तवान् ।

''अस्तु तात ! इतः परं तथैव करिष्यामि'' इति उक्तवान् सुन्दराङ्गः ।

अनन्तरदिने रङ्गनाथः कस्यचित् कार्यस्य निमित्तं प्रातः एव गृहात् निर्गत्य सायङ्कालसमये प्रत्यागतः । गृहं प्रत्यागतं पितरम् उक्तवान् सुन्दराङ्गः – ''पूर्वम् अस्मत्तः धान्यं स्वीकृतवान् आसीत् खलु नागराजः ? सः अद्य आगत्य विंशतिसहस्रं रूप्यकाणि दत्त्वा गतवान् । धनं स्वीकृत्य तस्मै प्राप्तिपत्रं दत्तवान् अस्मि '' इति ।

''एवं वा ? नागराजतः धनम् आनेतुं मया स्वयं गन्तव्यम् इति अहं चिन्तयन् आसम् । यतः व्याजं कथयन् सः धनदाने विलम्बम् आचरन् आसीत् । किन्तु पुत्र ! तस्य व्यवहारः न हि शुद्धः । तेन दत्तं धनं सम्यक् गणितं खलु भवता ?'' इति पुत्रम् आतङ्कमिश्रितेन स्वरेण पृष्टवान् रङ्गनाथः ।

तदा सुन्दराङ्गः साभिमानम् उक्तवान् – ''आं, सर्वं गणितं मया । सः सहस्ररूप्यकात्मकान् विंशतिं ग्रन्थीन् दत्तवान् । तेषु त्रिचाणां ग्रन्थीनां धनं गणयित्वा मया निर्णीतं यत् सर्वेषु धनं सम्यक् अस्ति इति । भवता बोधितः क्रमः मया सम्यक् अनुष्ठितः । धनं समग्रं प्राप्तम् इति प्राप्तिपत्रं दत्त्वा धनं पेटिकायां स्थापितम्'' इति ।

एतत् श्रुत्वा रङ्गनाथः आतङ्कम् अनुभवन् झटिति अन्तः गत्वा पेटिकाम् उद्घाट्य सर्वग्रन्थिषु स्थितं धनं गणितवान् । आहत्य तेषु अष्टादशसहस्रं रूप्यकाणि एव आसन् । नागराजः सुन्दराङ्गस्य व्यवहारानभिज्ञतां जानन् द्विसहस्रं रूप्यकाणि न्यूनतया दत्त्वा गतवान् आसीत् । 'अहो ! अहं वञ्चितः अभवम् !' इति स्वगतं वदन् खेदम् अनुभूतवान् रङ्गनाथः । पुत्रं क्रोधेन पश्यन् रोदनं कृतवान् सः ।

पितुः कोपस्य कारणम् अजानन् सुन्दराङ्गः चिन्तितवान् – 'एतेषां ज्येष्ठानां व्यवहारः एव विचित्रः । यथा बोधितं तथैव कृतं मया । तथापि मयि कोपः तातस्य । न जाने, किं कारणम् इति' इति ।



# चन्दमामानुबन्धः - ६४

अस्मद्देशीया पशुपक्षिसम्पत् -

## श्वेतव्याघ्रः



श्वेतव्याघ्रविषयः यदा अनूद्यते तदा काचित् घटना स्मृतिपथम् आगच्छति । इतः ४० वर्षेभ्यः पूर्वं - तन्नाम १९५१ तमे वर्षे मे-मासस्य २६ तमे दिनाङ्के काचित् घटना प्रवृत्ता । रेवामहाराजः अतिथीनां निमित्तं 'रेवा'नामके अरण्ये मृगयार्थं व्यवस्थां कृतवान् आसीत् । मृगयासमये चतुर्भिः अपत्यैः सहिता व्याघ्री दृष्टिगोचरा जाता । सा व्याघ्री तस्याः त्रीणि अपत्यानि च मृगयाविहारिभिः मारितानि । चतुर्थम् अपत्यं कथमपि आत्मानं रक्षत् ततः पलायनम् अकरोत् । अनन्तरदिने तत्परिसरे तत् व्याघ्रापत्यं जनैः अन्विष्टम् । तत् गोविन्दगढनामकं विश्रान्तिधाम प्रति नीतम् । तत्र तत् रात्रौ च्युतम् अभवत् । प्रातः पुनः अन्विष्य गृहीतम् । नवमासीयस्य तस्य नाम 'मोहनः' इति निश्चितम् अभवत् । ततः मोहनस्य 'बेगं'-नामिकायाः व्याघ्र्याः च सम्पर्कात् दश शिशवः उत्पन्नाः । किन्तु तेषु एकः अपि श्वेतवर्णीयः न आसीत् । ततः मोहनस्य 'राधा'नामिकायाः सामान्यव्याघ्र्याः च सम्पर्कः कारितः । ततः चत्वारः व्याघ्रशिशवः उत्पन्नाः । ते चत्वारः अपि श्वेतवर्णीयाः आसन् । १९५८ तमे वर्षे अक्टोबरमासे ३० तमे दिनाङ्के एषा घटना प्रवृत्ता । एवं मोहननामकः श्वेतव्याघ्रः देशे विदेशे च स्थितायाः श्वेतव्याघ्रसन्ततेः मूलं जातः ।

१९९० तमवर्षस्य गणनातः ज्ञायते यत् अस्मद्देशस्य दशसु प्राणिसङ्ग्रहालयेषु १६ श्वेतव्याघ्राः, २३ श्वेतव्याघ्र्यः, विदेशस्थेषु अष्टसु मृगालयेषु ४० श्वेतव्याघ्राः, ३८ श्वेतव्याघ्र्यः, १० श्वेतव्याघ्रशिशवः च आसन् इति । न जानीमः वयम् - इदानीं कति सन्ति इति ।

सामान्यानां व्याघ्राणां वर्णः नारङ्गवर्णः - तन्नाम सुवर्णवर्णमिश्रितः पीतः । तेषां शरीरे कृष्णपट्टिकाः भवन्ति । मुखस्य, कण्ठस्य, उदरस्य च अधोभागः श्वेतः भवति । नेत्रे नीलवर्णे भवतः । श्वेतव्याघ्रः सामान्यव्याघ्रस्य अपेक्षया आकारेण महान् । किन्तु उभयविधयोः अपि व्याघ्रयोः स्वभावः तु समानः ।

अकबरस्य आस्थाने स्थितेन नवरत्नेषु अन्यतमेन अबुल्फजलवर्येण १५६१ तमे वर्षे रचिते 'अकबरनामा' - नामके ग्रन्थे श्वेतव्याघ्रस्य उल्लेखः कृतः दृश्यते ।




# रामकिङ्करमहोदयः



विश्वकविना रवीन्द्रनाथ-ठागोर्महोदयेन स्थापिते शान्तिनिकेतने सुप्रसिद्धः चित्रकारः नन्दलालबोस्-महोदयः कलाभवनकार्यं निर्वहति स्म। १९२५ तमे वर्षे रामकिङ्करनामकः कश्चित् बालकः नन्दलालबोस्-समीपम् आगतवान्।

नन्दलालः तं बालं पृष्टवान् - "भवता चित्रितानि चित्राणि सन्ति वा ?" इति।



तदा सः बालः रामकिङ्करः 'सन्ति' इति वदन् चत्वारिंशत्पृष्ठात्मकं जीर्णम् एकं टिप्पणीपुस्तकं दर्शितवान्। तस्मिन् पुस्तके तेन चित्रितानि चित्राणि आसन्।

नन्दलाल्वर्यः तानि चित्राणि दृष्ट्वा मन्दहासपूर्वकं शिरः चालयन् रामकिङ्करं कलाभवने विद्यार्थिरूपेण स्वीकर्तुम् अङ्गीकृतवान्।

तत्पूर्वमेव 'मोडरन् रेव्यू' - सम्पादकः रामानन्दचटर्जिमहाशयः रामकिङ्करस्य सामर्थ्यं जानाति स्म। सः एव तं शान्तिनिकेतनं प्रति प्रेषितवान् आसीत्।

स्वविषयकं श्रेयोभिलाषिणां विश्वासं शीघ्रातिशीघ्रमेव पूरितवान् आजन्मप्रतिभावान् रामकिङ्करः।



रामकिङ्करः अद्भुत-कल्पनाशक्त्या अध्यापकानां मित्राणां च प्रीतिपात्रं जातः। सः कलाभवने पश्चिम - चित्रकला-सम्प्रदायान् शीघ्रम् एव अभ्यस्य स्वकीयाम् एव विशिष्टां पद्धतिम् अभ्यस्तवान् । भारतीय-चित्रकलायां नैरूप्यशैलीं योजयन् तस्य मार्गदर्शकः जातः।

वस्तुनः व्यक्तेः वा यथावत् चित्रणम् अकृत्वा भावप्राधान्येन स्फुटतया आत्मप्रतीकतया च अङ्गस्य चित्रणम् एव 'नैरूप्यशैली' इति उच्यते। मेधावित्वं सूचयितुं शरीरपरिमाणस्य अपेक्षया अपि अधिकपरिमाणवतः शिरसः चित्रणम् अत्र उदाहरणम्।

रामकिङ्करस्य चित्राणि नितराम् अपूर्वाणि । प्रकृति-दृश्यानि, पक्षिणः, प्राणिनः, मनुष्याः, अद्भुतप्राणिनः (देहल्याः रिसर्वबैंकोषस्य पुरतः रामकिङ्करेण चित्रित यक्षशिल्पद्वयम् अस्ति) इत्यादीनि विविधचित्राणि सः चित्रितवान्।

रामकिङ्करस्य जीवनशैली सरला। तस्य जीवने आडम्बरव्यवहारस्य स्थानम् एव न आसीत्। विद्यार्थिभिः, कलाभिमानिभिः, विमर्शकैः च सः बहुविधैः गौरवैः दृष्टः चेत् अपि रामकिङ्करस्य किञ्चित् अपि गर्वः न आसीत्। सुखे दुःखे च समभावः आसीत् तस्य जीवने।

१९७६ तमे वर्षे विश्वभारती विशिष्टेन पारितोषिकेण रामकिङ्करवर्यस्य सत्कारम् अकरोत्। विविधरङ्गीयैः प्रमुखैः सः बहुधा प्रशंसितः अभवत्। १९८० तमे वर्षे सः - स्वजीवनस्य ७० तमे वयसि - दिवङ्गतः।

# भवन्तः जानन्ति वा ?

१. भारताय स्वातन्त्र्यं दातव्यम् इति इंग्लैण्डदेशेन यदा निर्णीतं तदा भारते वाइसरायपदे कः आसीत् ?
२. प्रपञ्चस्तरे अत्यधिकप्रमाणेन कः देशः शर्कराम् उत्पादयति ?
३. कालिदास-समकालीनः राजा कः ?
४. कस्य देशस्य धनं 'लीरा' पदेन उच्यते ?
५. 'बुद्धचरितं' नामकस्य ग्रन्थस्य रचयिता कः ?
६. 'सेफ्टि पिन्' केन अन्विष्टम् ?
७. अस्माकं देशे कस्मिन् प्रदेशे अरण्यम् अधिकतया अस्ति ?
८. 'पाटलखातः' कस्मिन् देशे अस्ति ?
९. अस्माकं देशे सरोवरस्य मध्ये स्थितं राष्ट्रियोद्यानं किम् ?
१०. अस्माकं देशस्य सुविशाला मरुभूमिः का ?
११. अस्माकं देशे रेशन्-पद्धतिः कदा आरब्धा ?
१२. जयशङ्करप्रसादवर्येण विरचितः सुप्रसिद्धः ग्रन्थः कः ?
१३. न्यूनतमोष्णांशयुक्तः शीतकालः कुत्र भवति ?
१४. मोहनदास-करमचन्द-गान्धिवर्यः दक्षिणाफ्रिकातः अस्माकं देशं कस्मिन् वर्षे प्रत्यागतः ?
१५. इण्डोनेशिया गणराज्यं कः स्थापितवान् ?
१६. लवङ्गं मरीचं च किं राज्यम् अधिकप्रमाणेन उत्पादयति ?
१७. विम्बल्डन्-पारितोषिकव्यवस्था कदा आरब्धा ?
१८. अस्मद्देशीयः चतुरङ्गक्रीडापटुः कः ?
१९. 'वन्दे मातरं' इत्येतत् गीतं कः रचितवान् ?

## उत्तराणि

१. लार्ड् वेवेल्वर्यः ।
२. क्यूबादेशः ।
३. चन्द्रगुप्त विक्रमादित्यः ।
४. इटलीदेशस्य ।
५. अश्वघोषः ।
६. वाल्टर्हण्ट्वर्येण ।
७. अरुणाचलप्रदेशे ।
८. बल्गेरियादेशे ।
९. मणिपुरस्थं मधुपुर-राष्ट्रियोद्यानम् ।
१०. सहारामरुभूमिः
११. १९४३ तमे वर्षे, बंगालदेशे अनावृष्टिः यदा आसीत् तदा ।
१२. कामयानी ।
१३. ईशान्यसैबीरियाप्रदेशे । उष्णांशः - ५० सैण्टिग्रेड् ।
१४. १९९५ तमे वर्षे ।
१५. सुकर्णोवर्यः ।
१६. केरलराज्यम् ।
१७. १८८७ तमे वर्षे ।
१८. विश्वनाथ-आनन्दः ।
१९. बङ्किमचन्द्रचटर्जी ।



# सन्मार्गाश्रयणम्

सदाशिवपुरस्य नरेन्द्रस्य विवाहः सद्यः एव जातः। पत्न्या भानुमत्या सह सः शकटम् आरुह्य स्वग्रामं प्रति प्रस्थितवान्। मध्येमार्गं काचित् नदी दृष्टा। नरेन्द्रः शकटात् अवतीर्य तं परिसरं परिशीलितवान्। नद्याः अनतिदूरे एकं प्राचीनं गृहम् आसीत्। गृहं परितः शाकोद्यानम् आसीत्। उभौ कुब्जौ दम्पती शाकोद्याने कार्यं कुर्वन्तौ शाकसङ्ग्रहं कुर्वन्तौ दृष्टौ नरेन्द्रेण।

एतत् दृष्ट्वा तृप्तिम् अनुभवन् नरेन्द्रः पुनः शकटम् आरूढवान्। तस्य मुखे मन्दहासं दृष्ट्वा पृष्टवती भानुमती - "किं तौ कुब्जौ दृष्ट्वा हसति वा भवान् ?" इति।

"तथा न। मासचतुष्टयेभ्यः पूर्वं यत् प्रवृत्तं तत् स्मरतः मम मुखे हासः उत्पन्नः" इति उक्तवान् नरेन्द्रः।

"का सा घटना ? विस्तरेण वदतु। तेन प्रयाणखेदः अपि निवारितः भवेत्" इति उक्तवती भानुमती।

तदा नरेन्द्रः पूर्वतनघटना निवेदितवान् -

मासचतुष्टयात् पूर्वम् अहम् एतेन मार्गेण गच्छन् आसम्। वृष्टिकारणतः नदीप्रवाहे आधिक्यम् आसीत्। अतः अग्रे गन्तुं न शक्यते इति उक्त्वा शाकटिकः माम् एतत्प्रदेशे अवतार्य मत्तः यथायोग्यं धनं प्राप्य प्रतिगतवान्।

तदा अन्धकारप्रसारः आरब्धः आसीत्। मन्दा वृष्टिः अपि आसीत्। अतः अहं समीपस्थं गृहं गत्वा द्वारशब्दं कृतवान्। तदा काचित् कुब्जा वृद्धा द्वारम् उद्घाट्य पृष्टवती - "कः भवान् ? किम् आवश्यकम् ?" इति।

"प्रवाहाधिक्यकारणतः अग्रे गन्तुम् अशक्तः कश्चन प्रयाणिकः अहम्। अद्य रात्रौ अत्र वासं कर्तुम् अनुमतिः दीयते वा ?" इति पृष्टवान् अहम्।

''भामहः''



''तत्र का आपत्तिः ? अन्तः आगच्छतु तावत्'' इति वदन् पार्श्वस्थात् प्रकोष्ठात् गृहस्वामी तत्र आगतवान् । सः अपि कुब्जः एव आसीत् ।

किञ्चित्कालानन्तरं तौ कुब्जदम्पती मह्यं सानुरोधं भोजनं दत्तवन्तौ । भोजनसमये वार्तालापमध्ये – ''मम अनुजः शिवस्वामी उक्तवान् आसीत् यत् सायङ्कालसमये आगमिष्यामि इति । किन्तु इतोऽपि न आगतः । न जाने, किं कारणम् इति, कदा आगमिष्यति इति च'' इति वदन्ती रोटिकाव्यञ्जनादिकं पात्रे संस्थाप्य तत् पार्श्वे स्थापितवती कुब्जा ।

गृहस्य द्वारसमीपे स्थिते प्रकोष्ठे मम वासः कल्पितः । तौ वृद्धदम्पती अन्तः प्रकोष्ठे शयनं कृतवन्तौ । अल्पे एव काले मया निद्रा प्राप्ता । तन्मध्ये द्वारताडनशब्दः श्रुतः ।

''कः ?'' इति उत्थाय उपविश्य पृष्टवान् अहम् ।

''अहं शिवस्वामी'' इति उक्तवान् सः द्वारताडनकर्ता ।

अहं गत्वा द्वारम् उद्घाटितवान् । अहो आश्चर्यम् ! अवगुण्ठनधारी कश्चित् छुरिकां गृहीत्वा द्वारसमीपे स्थितः अस्ति !

तावता – ''कः आगतः ? शिवस्वामी वा ?'' इति वदन्ती तत्र आगता वृद्धा अवगुण्ठनधारिणं चोरं दृष्ट्वा भीत्या आक्रोशनं कृतवती ।

यावत् अहं चोरं ग्रहीतुम् अग्रे गतः तावता सः चोरः वृद्धायाः समीपं गत्वा छुरिकां तस्याः कण्ठस्य समीपं नीत्वा माम् उद्दिश्य – ''यदि इतोऽपि एकं पदं भवान् अग्रे स्थापयेत् तर्हि एतस्याः वृद्धायाः कण्ठः शरीरात् पृथग्भूतः स्यात्'' इति कठोरस्वरेण उक्तवान् ।

ततः चोरः भीतिं जनयन् कुब्जद्वारा पेटिकायां स्थितानि आभरणानि धनं च आनायितवान् । मम अङ्गुल्यां स्थितम् अङ्गुलीयकं कोषस्थं धनं च वशीकृत्य सः वेगेन निर्गत्य द्वारं बहिर्भागे कीलयित्वा पलायितवान् ।

कुब्जदम्पत्योः धनाभरणादीनि चोरितानि यत् तेन अहं नितरां खिन्नः । 'यदि अहम् अविचार्य द्वारम् उद्घाटितवान् न स्यां तर्हि एतयोः धनहानिः न अभविष्यत्' इति

चिन्तयतः मम खेदः अधिकः जातः ।

अहं वृद्धदम्पती क्षमां प्रार्थितवान् । तदा कुब्जः - ''वस्तुतः भवान् नमस्करणीयः आवाभ्याम् । यदि भवान् अविवेकेन चोरं गृहीतुं गतवान् स्यात् तर्हि सः मम पत्नीं मारितवान् स्यात्'' इति कृतज्ञतापूर्वकम् उक्तवान् ।

अनन्तरदिने प्रातः अहं ततः प्रस्थितवान् । गृहं प्राप्तवतः अपि मम मनःशान्तिः न आसीत् । अहं मातरं प्रवृत्तं समग्रं निवेदितवान् । तदा माता सानुकम्पम् उक्तवती - ''भवत्कारणतः तयोः कुब्जदम्पत्योः धनहानिः जाता खलु ? अतः सहस्र रूप्यकाणि नीत्वा ताभ्यां दत्त्वा आगच्छतु । तेन तयोः कष्टं किञ्चिदिव परिहृतं स्यात्'' इति ।

अहं धनं स्वीकृत्य नदीसमीपं गतवान् । तत्समये अन्धकारः प्रसृतः आसीत् । नौकया नदीं तीर्त्वा अहं कुब्जदम्पत्योः गृहस्य समीपं गतवान् । किन्तु आश्चर्यं नाम गृहस्य पुरतः सः अवगुण्ठनधारी चोरः सुखेन उपविष्टः आसीत् । अहं कुतूहलेन वृक्षाणां मध्ये निलीय तिष्ठन् सर्वं परिशीलितवान् । गृहस्य अन्तर्भागतः कुब्जा आगतवती । चोरः तां पीडयेत् इति मम निरीक्षा आसीत् । किन्तु तौ मन्दस्वरेण किञ्चित्कालं वार्तालापं कृतवन्तौ । वृद्धा पुनः अन्तः गतवती ।

इदानीं मया सम्यक् अवगतं यत् एषः अवगुण्ठनधारी कुब्जपक्षीयः एव, वयः अपि सम्भूय लुण्ठनघटनाम् अभिनीय



प्रयाणिकानां धनादिकं लुण्ठयन्ति, ततः जीवननिर्वहणं कुर्वन्ति इति ।

अहं विना शब्दम् अवगुण्ठनधारिणः समीपं गत्वा मुष्ट्या तं कण्ठे प्रहृतवान् । सः अधः पतितः । तस्य अवगुण्ठनम् अहं धृत्वा छुरिकां हस्तेन गृहीत्वा द्वारताडनशब्दं कुर्वन् उक्तवान् - ''द्वारम् उद्घाटयन्तु । अहं शिवस्वामी आगतः अस्मि'' इति ।

अमूल्यवस्त्रधारी कृशकायः कश्चन वृद्धः द्वारम् उद्घाटयन् - ''भवन्तं भवतः भगिनी प्रतीक्षमाणा अस्ति'' इति वदन् मां दृष्ट्वा भीतः सन् तत्रैव पतितः । तस्मिन् दिने तद्गृहे आश्रयं प्राप्तवान् प्रयाणिकः आसीत् सः ।

तावता कुब्जा वृद्धा अन्तर्भागतः आगत्य - ''किं मम अनुजः आगतः ?'' इति

पृच्छन्ती मां दृष्ट्वा उच्चैः आक्रोशनं कृतवती।

अहं छुरिकां तस्याः कण्ठसमीपे स्थापयन् - "किम् अद्य भवत्याः पतिः अत्र नास्ति इति भाति खलु ?" इति वदन् तस्याः वृद्धायाः द्वारा गृहे स्थितानि धनाभरणादीनि आनायितवान् । ततः वृद्धां प्रकोष्ठे स्थापयित्वा बहिर्भागतः कीलितवान्।

ततः तत्रैव उपविश्य कुब्जदम्पती उद्दिश्य एकं पत्रं लिखितवान् - "भवतोः आकारानुगुणा एव अस्ति बुद्धिः अपि। चौर्यं नितरां निन्द्या वृत्तिः । 'चोरः' इति अपख्यातिः सकृत् प्राप्ता चेत् पुनः तस्याः निवारणं नितरां दुस्साध्यम् । वञ्चनया प्रयाणिकान् वञ्चयन्तौ भवन्तौ रक्षकभटाधीनौ कर्तुं शक्नोमि अहम्। किन्तु अहं भवतोः शरीरदौर्बल्यं दृष्ट्वा उत्तमजीवनप्राप्त्यर्थम् एकम् अवकाशं कल्पयन् अस्मि । भवतोः गृहं परितः विशालः अवकाशः अस्ति। पार्श्वे एव नदी अस्ति। अतः भवन्तौ अल्पेन एव परिश्रमेण गृहं परितः शाकोद्यानं निर्मातुं शक्नुतः । चिन्तयताम्। चौर्यवृत्तिः एव अनुवर्तिता चेत् कारागारवासः तु निश्चितः। इदानीम् अत्र यत् प्राप्तं तत् लोकहितकार्यार्थं व्ययीकरिष्यामि । एतया घटनया भवन्तौ अवश्यं विवेकं प्राप्नुतः इति मम आशयः" इति।

एतत् पत्रं तत्रैव मूर्च्छया पतितस्य धनिकस्य कोषे स्थापयित्वा अहं स्वग्रामं प्रत्यागतवान्।

एवं पूर्वतनघटनां पत्नीं निवेद्य उक्तवान् नरेन्द्रः - "कुब्जदम्पत्योः गृहं परितः शाकोद्यानस्य दर्शनात्, उद्याने तयोः कार्यरतत्वस्य दर्शनात् च ज्ञायते यत् तौ चौर्यवृत्तिं परित्यज्य सन्मार्गम् आश्रितवन्तौ इति। एतत् दृष्टवतः मम मुखे तृप्तिसूचकः मन्दहासः उत्पन्नः" इति।

"भवतः बुद्धिमत्ता साहसप्रवृत्तिः च अपूर्वा । अग्रे कदाचित् यदा वयम् अत्र आगच्छेम तदा तौ दृष्ट्वा अभिनन्दनवचनानि वदाम" इति सन्तोषेण पतिं नरेन्द्रम् उक्तवती भानुमती।



# र स वा र्ताः



## स्नानं कारयति यन्त्रमानवः

स्नानम् अपि भवतां श्रमजनकं वा ? एवं तर्हि भवतां निमित्तम् एव नूतनः स्नानप्रकारः सज्जीकृतः अस्ति । अचिरात् एव पत्रिकायां एतद्विषये प्रकटनं प्रकाशितं भवेत् अपि । जपान्जनाः यन्त्रमानवं स्नानकारणार्थं सज्जीकृतवन्तः सन्ति । भवद्भिः करणीयं तु एतावत् - ६ मीटरात्मके स्नानपात्रे प्रथमं शयनं करणीयम् । यदा उष्णजलं शरीरस्य उपरि पतति तदा नेत्रे निमीलनीये । ततः फेनकजलं शरीरस्य उपरि पतति । ततः उष्णजलस्य सेचनं भवति । अन्ते शीतलः वायुः भवच्छरीरस्थं जलांशम् अपनयति । एवं सर्वं यन्त्रमानवः एव करोति इत्यतः जलस्वीकारः, फेनकलेपनं, शरीरमार्जनम् इत्यादयः परिश्रमाः भवतां न भवन्ति एव । मानवाः अपि यादृशीं सेवां कर्तुं न शक्नुयुः तादृशीं समीचीनतरां सेवां करोति यन्त्रमानवः । किन्तु शिरःस्नानं करणीयं चेत् पूर्वम् एव स्वयं कृत्वा स्नानपात्रे उपवेशनं वरम् । अन्यथा फेनकजलं भवतां नेत्रे प्रविशेत् अपि । जपान्देशीयाः पञ्च संस्थाः सम्भूय एतं 'बात्-रोबोट्' नामकं स्नानप्रकारं सज्जीकृतवत्यः सन्ति । किन्तु एतत् स्नानं महाव्ययकारि । एकस्य स्नानस्य मूल्यं १४ लक्षं रूप्यकाणि !!!

## इंग्लीष्खातप्रदेशे निवेशनानि



इंग्लीष्खातप्रदेशे १९ शतके देशरक्षणार्थं निर्मितं किञ्चन दुर्गम् इदानीं वैभवोपेत-वसतिगृह-समूहत्वेन परिवर्तमानम् अस्ति । फ्रेञ्चसैन्यम् इंग्लण्डदेशम् आक्रमितुं यथा न शक्नुयात् तथा कर्तुम् इंग्लण्डदेशेन रक्षणादलस्य वासार्थं किञ्चन दुर्गम् इंग्लीष्खातप्रदेशे निर्मितम् आसीत् । तत्र ५० अग्न्यस्त्राणि, ४०० सैनिकाः च वसन्ति स्म । तत् दुर्गम् वासगृहरूपेण परिवर्तनीयम् इति उद्देशेन ६.२५ दशलक्षडालरमूल्येन विक्रीतम् । तत्प्रदेशे दीपगृहं हेलिकाप्टर्-स्थानकं चापि अस्ति ।



# सामान्य-महात्म-भेदः

कदाचित् कश्चन सन्यासी देशाटनं कुर्वन् लक्ष्मीपुरम् आगत्य वटवृक्षस्य अधः वासं कृतवान् । सः ग्रामीणान् वेदान्तविचारान् बोधयति स्म । ग्रामीणाः तस्य आहारव्यवस्थां कुर्वन्ति स्म ।

कदाचित् सन्यासी लक्ष्मीशस्य गृहे भोजनं कुर्वन् आसीत् । तत्समये गुरुराजः तत्र आगत्य लक्ष्मीशम् उद्दिश्य - "पूर्वं यत् वचनं दत्तं तदनुगुणं मया श्वः भवते धनं प्रत्यर्पणीयम् । किन्तु तावत् धनम् इतोऽपि सङ्गृहीतं न अभवत् । अतः मासानन्तरं भवदीयं धनं प्रत्यर्पयिष्यामि । कृपया अनुमन्तव्यं भवता" इति प्रार्थितवान् ।

तदा लक्ष्मीशः कोपेन - "वचनपालने अश्रद्धालुः भवान् । भवते धनं दत्तं यत् तत् मम दोषः" इत्येवं बहुधा गुरुराजं तर्जयित्वा प्रेषितवान् ।

एतत् दृष्ट्वा सन्यासी लक्ष्मीशम् उक्तवान् - "वत्स ! कोपः अनर्थहेतुः । अतः प्रयत्नेन कोपः निग्रहणीयः । गुरुराजस्य तर्जनेन भवता किं वा साधितम् ? यत् धनं ततः प्राप्तव्यं तत् पूर्वं न प्राप्यते खलु ?" इति ।

तदा लक्ष्मीशः विनयेन उक्तवान् - "श्रीमन् ! अहं यद्यपि तर्जनवाक्यानि उक्तवान्, तथापि मम अन्तरङ्गे तु द्वेषभावना सर्वथा नास्ति । मम कोपः क्षणिकः । इदानीं प्राप्तं कोपं क्षणकालानन्तरं विस्मरिष्यामि । अतः मम कोपपात्रत्वं प्राप्य अपि कोऽपि खिन्नः न भवति" इति ।

एतत् श्रुत्वा सन्यासी - "कोपनिग्रहणं श्रेष्ठः मार्गः । कोपः क्षणिकः चेदपि वरम् एव । अन्तरङ्गं द्वेषादिभावनया विरहितं भवति इति अस्ति चेत् तत् अपूर्वं वैशिष्ट्यम्" इति यावत् वदन् आसीत् तावता तत्र लक्ष्मीशस्य मित्रं रमेशः आगतवान् ।

सः संन्यासिनं दृष्ट्वा - "कार्यम् अकुर्वन्तः अन्येषां श्रमस्य आधारेण ये सुखेन जीवन्ति ततः जुगुप्सा मम। अलसशिखामणयः एते। एतादृशाय भोजनं ददाति खलु भवान्! अहो मूर्खता भवतः!" इति उक्तवान्।

एतत् श्रुत्वा खिन्नः लक्ष्मीशः संन्यासिनं क्षमां प्रार्थितवान्। तदा संन्यासी - "लोकः भिन्नरुचिः। अभिप्रायभेदः लोके सहजः। अभिप्रायभेदं यः प्रकटयति तस्मिन् दोषः न आरोपणीयः अस्माभिः" इति लक्ष्मीशं मन्दहासपूर्वकम् उक्त्वा ततः निर्गतवान्।

ततः केषाञ्चित् दिनानाम् अनन्तरं लक्ष्मीशः संन्यासिनं द्रष्टुं वटवृक्षसमीपम् आगतवान्। तत्समये तत्रैव तद्ग्रामवासी महेशः अपि आसीत्।

महेशं दृष्टवान् लक्ष्मीशः झटिति अग्रे गत्वा तदीयं भुजं गृहीत्वा - "किं रे! मम दृष्टिपथम् अनागच्छन् ग्रामे सञ्चरति खलु भवान्? अद्य मम हस्तगतः जातः। इदानीं भवन्तं सम्यक् दण्डयिष्यामि" इति कोपेन उक्तवान्।

तदा संन्यासी - "वत्स! त्यजतु तम्। कोपं त्यजतु। प्रवृत्तं किम् इति वदतु" इति उक्तवान्।

लक्ष्मीशः महेशं परित्यज्य - "मासात् पूर्वं मया ग्रामदेवालये विशेषपूजा कारिता। तत्समये तत्रैव उपस्थितः एषः मम भक्तिं दृष्ट्वा उच्चस्वरेण - 'ये अकार्याणि कुर्वन्ति ते अधिकां दैवभक्तिं प्रदर्शयन्ति' इति वदन् मम अवमाननं कृतवान् अस्ति" इति उक्तवान्।

तदा संन्यासी महेशं स्वसमीपम् आहूय - "वत्स! अन्येषां मनः व्यथितं यथा भवेत्



तथा न व्यवहरणीयम्'' इत्येवं वदन् सद्व्यवहारं प्रीत्या बोधितवान्।

तावता क्लेशः तत्र आगतः। सः संन्यासिनं साष्टाङ्गं नमस्कृत्य – ''श्रीमन्! क्षन्तव्यः मम अपराधः। भवतः माहात्म्यम् अज्ञात्वा मया भवद्विषये लघुवचनानि उक्तानि'' इति क्षमां प्रार्थितवान्।

एतत् दृष्ट्वा संन्यासी मन्दहासपूर्वकं – ''वत्स! किमर्थं क्षमायाचनम्? तादृशः अपराधः भवता कः कृतः इत्येव न ज्ञायते मया। सर्वेषां क्षन्ता भगवान् एव। भगवतः प्रीतिः यथा भवेत् तथा व्यवहारः स्यात् अस्माकम्'' इति उक्तवान्।

वस्तुतः प्रवृत्तं तु एवम् – क्लेशस्य पत्नी घोरेण व्याधिना ग्रस्ता आसीत्। औषधोपचारेण अपि व्याधिः यदा न उपशान्तः तदा जनाः उक्तवन्तः यत् व्याधिम् अपनेतुं संन्यासी एव समर्थः, न अन्यः इति। तदा अनन्यगतिकतया क्लेशः संन्यासिनं शरणं गतवान्। संन्यासी सन्तोषेण एव क्लेशस्य गृहं गत्वा तस्य पत्नीं परीक्ष्य योग्यं चूर्णादिकं तस्यै दत्तवान्। मन्त्रोच्चारणादिभिः ग्रहपीडां निवारितवान्। ततः दिनद्वयाभ्यन्तरे क्लेशस्य पत्नी स्वस्था जाता।

संन्यासिनः क्षमागुणं दृष्ट्वा आश्चर्यम् अनुभवन् लक्ष्मीशः संन्यासिनः समीपं गत्वा – ''श्रीमन्! विना कारणं निन्दितवन्तम् अपि क्लेशं भवान् क्षान्तवान्। महात्मा भवान्'' इति उक्तवान्।

तदा संन्यासी हसन् – ''वत्स! भवान् कमपि तर्जयति, ततः तत् विस्मरति। किन्तु अहं तु मां यः निन्दति तस्य निन्दनं न स्मरामि। यदि अहं कमपि तर्जयेयं तर्हि तत् माम् आजीवनं दहेत्। अतः अहं सदाऽपि कोपादितः आत्मानं रक्षामि'' इति उक्तवान्।

'सामान्याः प्रायः कोपं विस्मरेयुः। महात्मानः तु कदापि कोपम् एव न प्राप्नुवन्ति' इत्येतं विषयं ज्ञातवान् लक्ष्मीशः। ततः आरभ्य सः स्वस्य कोपं क्रमशः न्यूनीकृतवान्।





# वीरः हनूमान्

रामराज्ये न्यायविषये यः कोऽपि महाराजसमीपं गत्वा निरातङ्कं स्वदुःखं निवेदयितुं शक्नोति स्म । यः कोऽपि यदि राजानं रामं किमपि निवेदयितुम् इच्छति तर्हि भटाः विनयेन व्यवहरन्तः तं सादरं रामसमीपं नयन्ति स्म । यदि तादृशः कष्टपीडितः अपि स्यात् तर्हि रामः कष्टं परिहरिष्यति इत्यत्र सन्देहः एव न आसीत् । रामस्य प्रजाप्रीतिः एतादृशी आसीत् यत् देशे कोऽपि रामस्य अप्रियं कार्यं कर्तुं सर्वथा न इच्छति स्म ।

कदाचित् रात्रिसमये आसन्नमरणः कश्चन शुनकः रक्तवमनं कुर्वन् रामभवनस्य समीपं गत्वा वेदनापूर्वकम् अभषत् ।

एतत् श्रुत्वा रामः जागरितः । सः भवनात् बहिः आगत्य प्रीत्या शुनकस्य शिरः स्पृष्टवान् । एतेन शुनकस्य वेदना किञ्चिदिव अपगता अभवत् ।

सः रामम् उक्तवान् – "हे राम ! कश्चित् मार्गे मां सम्यक् ताडितवान् । निरुद्योगी सः वाममार्गम् अनुसरन् अस्ति । तं युवकं कस्यचित् देवालयस्य धर्माधिकारिणं करोतु इति प्रार्थयामि" इति ।

शुनकस्य वचनेन चकितः रामः पृष्टवान् – "यः भवन्तं ताडितवान् सः कठोरं दण्डनीयः खलु ! किमर्थं भवान् दुष्टस्य अपि हितम् एव चिन्तयति ?" इति ।

"गतजन्मनि अहं कस्यचित् महादेवालयस्य धर्माधिकारी भूत्वा प्रधानार्चकत्वेन पूजां करोमि स्म ।

ताडनादिनेषु देवालयस्य वस्तूनि आभरणादीनि च अपहृतवान् अहम् । अतः एव इदानीं शुनकरूपेण जन्म प्राप्तवान् अस्मि । मां यः ताडितवान्, सः युवकः अपि शुनकजन्म प्राप्य कष्टम् अनुभवेत् । तदा मम प्रतीकारः साधितः भविष्यति । एवं विचिन्त्य मम आशयं प्रकटीकृतवान् अहम् । किन्तु भवतः हस्तस्पर्शेन मम प्रतीकारेच्छा अपगता । भवतः कृपायाः पात्रीभूतः अहं सद्गतिं प्राप्स्यामि'' इति उक्त्वा प्राणान् त्यक्तवान् शुनकः ।

शुनकं ताडितवान् युवकः अपि अनन्तरकाले सर्वं ज्ञात्वा अतीव पश्चात्तापम् अनुभूतवान् । सज्जनः जातः च ।

* * *



अश्वमेधयागं समाप्य रामः उत्तमरूपेण राज्यं पालयन् आसीत् । तेषु दिनेषु कदाचित् यमराजः ब्राह्मणवेषेण रामसमीपम् आगत्य उक्तवान् – ''राम ! रहसि भवता सह किञ्चित् सम्भाषणं करणीयम् अस्ति । अतः एकान्तस्थलं किञ्चित् कल्पयतु । आवयोः सम्भाषणमध्ये यः कोऽपि न आगच्छेत् । यदि कश्चित् आगच्छेत् तर्हि भवता तस्य शिरश्छेदनं करणीयम्'' इति ।

रामः यमस्य वचनम् अङ्गीकृतवान् । अनन्तरं लक्ष्मणं विषयं निवेद्य, तं द्वारे रक्षकरूपेण संस्थाप्य यमेन सह रहस्यमन्दिरस्य अन्तः गतवान् ।

तदा यमः रामम् उक्तवान् – ''राम ! भवतः रामावतारकालः समाप्तः । इदानीं भवान् महाविष्णुः । सीता लक्ष्मीरूपेण स्वस्य मातृगृहं क्षीरसागरं प्राप्य भवन्तं प्रतीक्षमाणा अस्ति । आदिशेषः, शङ्खः, चक्रम् इत्यादयः भवतः अनुजाः । तैः सह भवता क्षीरसागरस्य प्रवेशः करणीयः'' इति ।

तस्मिन् एव समये दूर्वासाः अकस्मात् तत्र आगतवान् । सः लक्ष्मणम् उक्तवान् – ''इदानीम् एव मया रामः द्रष्टव्यः । नो चेत् 'रघुवंशस्य नाशः भवतु' इति शापं ददामि । जागरूको भवतु'' इति ।

वंशस्य नाशापेक्षया मम एव शिरश्छेदनं वरम् इति विचिन्त्य, अग्रजस्य आज्ञां स्मरन्नपि लक्ष्मणः दूर्वासोमुनेः आगमनवार्तां रामं निवेदयितुं समालोचन-मन्दिरस्य अन्तः गतवान् ।

तत्क्षणे एव यमः अदृश्यः जातः । रामः स्ववचनानुसारं लक्ष्मणस्य शिरच्छेदनार्थं व्यवस्थां कृतवान् । तदा ज्येष्ठाः राजानं रामम् उक्तवन्तः - ''देशात् बहिष्कारः शिरच्छेदसमानः । अतः लक्ष्मणं देशात् बहिष्करोतु'' इति । रामः एतं विषयं लक्ष्मणम् उक्तवान् ।

अग्रजस्य वचनं भक्त्या शिरसा वहन् लक्ष्मणः सरयूनद्यां लीनः सन् स्वकीयम् अवतारं समापितवान् ।

अनन्तरं रामः भरतशत्रुघ्नौ प्रवृत्तं सर्वं निवेद्य 'लवकुशयोः पट्टाभिषेकार्थं व्यवस्था करणीया' इति उक्तवान् ।

पट्टाभिषेककार्यक्रमनिमित्तम् अयोध्या सुन्दरम् अलङ्कृता ।

रामः लवकुशयोः पट्टाभिषेकं कारयित्वा हनूमन्तम् आहूय उक्तवान् - ''हनूमन् ! अहं बहुकालं यावत् राज्यपालनं कृतवान् । इदानीं विश्रान्तिम् इच्छामि अहम् । अहम् अत्र भवामि वा न वा, भवता लवकुशयोः आधाररूपेण स्थित्वा सर्वं द्रष्टव्यम् । लवकुशौ एव रामः इति सम्भाव्य तयोः योगक्षेम-निर्वहणं भवतः प्रधानं कर्तव्यम् । राज्यरक्षणदायित्वम् अपि भवतः एव'' इति ।

हनूमान् अङ्गीकारपूर्वकं शिरः चालयन् रामं नमस्कृतवान् ।

रामः सरयूनदीं प्रति गमनार्थं महतीं शोभायात्राम् आयोजितवान् । तत् दिनं पर्वदिनम् । मङ्गलवाद्यानि वाद्यन्ते स्म । ब्राह्मणाः वेदघोषं कुर्वन्ति स्म । रामः पादाभ्याम् एव सरयूनदीं प्रति प्रस्थितः ।





भरतः रामस्य उपरि श्वेतच्छत्रं गृहीतवान्। शत्रुघ्नः चामरं वीजयितुम् आरब्धवान्। भवनस्य अट्टे स्थिताः सुमङ्गल्यः पुष्पवृष्टिं कृतवत्यः। कान्तिहीनः हनूमान् मन्दगत्या रामम् अनुसृतवान्। रामः किंनिमित्तं सरयूं प्रति प्रस्थितः इति अजानत्यः प्रजाः अपि रामम् अनुसृतवत्यः। किञ्चित्कालानन्तरं सर्वे सरयूं प्राप्तवन्तः।

रामः सरयूनद्यां पादौ स्थापितवान्। भरतः शङ्खं वादितवान्। शत्रुघ्नः कर्पूरं प्रज्वाल्य नीराजनं कृत्वा चक्ररूपेण तत् पुटीकृतवान्। ब्राह्मणाः उच्चैः सामवेदं गायन्ति स्म। मङ्गलवाद्यानां ध्वनिः सर्वदिक्षु अपि प्रतिध्वनितः। भरतशत्रुघ्नौ नद्याम् अवतीर्य रामम् उभयतः स्थितवन्तौ।

अनन्तरं रामः नद्यां मन्दगत्या चलन् नद्याः गभीरस्थानं गत्वा दक्षिणहस्तेन प्रजाः आशिषा अनुगृह्णन् - 'गृहं गच्छन्तु। सन्तोषेण चिरकालं जीवन्तु' इति उक्तवान्।

तदा लवकुशयोः समीपे स्थितः हनूमान् दुःखावेगेन - ''राम! तिष्ठतु! प्रथमम् अहं नद्यां शरीरत्यागं करोमि। भवन्तं विना अहं कथं जीवामि?'' इति उक्त्वा क्रन्दनं कुर्वन् नद्याम् अवतर्तुम् उद्युक्तः।

तदा रामः हस्तसङ्केतेन हनूमन्तं निवारयन् - ''हनूमन्! भवान् चिरजीवी। मया उक्तं सर्वं विस्मृतवान् वा भवान्? लवकुशाभ्यां सह भवान् इदानीम् एव गच्छतु इतः'' इति उच्चस्वरेण आज्ञापितवान्।

अनन्तरं हनूमान् लवकुशाभ्यां सह राजमन्दिरं गतवान्।

रामः सरयूनद्याः गभीरप्रदेशं गत्वा अदृश्यः जातः। रामम् अनुसृतवन्तौ भरतशत्रुघ्नौ अपि सरयूनद्यां लीनौ जातौ। रामावतारः परिसमाप्तः।

क्षीरसागरे लक्ष्मणः आदिशेषः भूत्वा महाविष्णोः शयनार्थं तल्परूपेण स्थितवान्। रसातलात् आगता सीता पतिं प्रतीक्षमाणा आसीत्। रामः विष्णुरूपेण आगत्य आदिशेषतल्पे शयितवान्। भरतशत्रुघ्नौ शङ्खचक्ररूपेण विष्णोः हस्तौ आश्रितवन्तौ। लक्ष्मीः महाविष्णोः पादसेवां कर्तुम् आरब्धवती।

• • •

कदाचित् लवकुशौ सिंहासने उपविश्य



मातापितरौ स्मरन्तौ अतीव दुःखितौ आस्ताम् । तदा हनूमान् तौ सान्त्वयन् - ''रघुवंशे सञ्जातौ भवन्तौ धीरौ शूरौ च । तादृशाभ्यां भवद्भ्यां दुःखं न करणीयम्, अपि तु श्रद्धया राज्यपालनं करणीयम् । यदि भवन्तौ मातापितरौ सीतारामौ द्रष्टुम् इच्छतः, तर्हि अहं दर्शयिष्यामि । तौ मम हृदयमन्दिरे विराजमानौ स्तः । पश्यताम्'' इत्युक्त्वा स्वकीयं वक्षःस्थलं विदार्य दर्शितवान् ।

हनूमतः वक्षःस्थले सीतारामौ मन्दहासपूर्वकं प्रीत्या च पुत्रौ आशिषा अनुगृह्णन्तौ आस्ताम् । तौ दृष्ट्वा लवकुशौ अतीव सन्तुष्टौ ।

कालक्रमेण लवकुशौ प्रौढौ जातौ । तौ उत्तमरूपेण राज्यपालनं कुरुतः । कुशः शुभया सह पूर्वस्यां दिशि स्थिते मणिपुरे, लवः च शोभया सह पश्चिमदिशि स्थिते मधुरायां च वसतः स्म ।

गच्छता कालेन तत्र महती विपत् उपस्थिता । राक्षसानाम् अपेक्षया अपि क्रूरतमः घोरकलिः नाम मानवरूपी राक्षसः शक - कुशानादिजातीयैः पर्वतकुलीयैः सह मिलित्वा वायव्यदिक्तः आगत्य पश्चिमोत्तरभागे प्रजानाम् उपरि आक्रमणं कृतवान् । ते च दुष्टाः सैनिकाः निर्दयं प्रजाः लुण्ठयन्तः बहुधा पीडयन्ति स्म ।

पश्चिमदिग्भागे कालकलिः नाम अपरः नरराक्षसः कालकेयकुलीयैः दुष्टैः सङ्गतः भूत्वा समुद्रमार्गेण आगत्य जनान् पीडयितुम् उद्युक्तः अभवत् । कालकलेः अनुज्ञां प्राप्तवन्तः कालकेयाः स्वेच्छया व्यवहरन्तः प्रजाः पीडयन्ति स्म । प्रजानां लुण्ठनात् प्राप्तानि धन-धान्यादीनि स्ववासस्थानं कालकूटद्वीपं नयन्ति स्म ते ।

एतेन भयग्रस्ताः सर्वाः प्रजाः किंकर्तव्यतामूढाः जाताः । स्वकीया सम्पत्तिः, प्राणाः च कथं रक्षणीयाः इति चिन्तयन्त्यः आसन् प्रजाः । तदा देशस्य कष्टस्थितिं जानन् हनूमान् प्रजाः उद्दिश्य उक्तवान् - ''केवलम् आत्मरक्षणं न उचितम् । सर्वैः ऐकमत्येन देशरक्षणं करणीयम्'' इति ।

प्रजाः हनूमतः कथनम् आदेशं भावयन्त्यः तदीयं वचनम् अङ्गीकृतवत्यः ।



अनन्तरं हनूमान् 'रामसैन्यम्' इति नाम्नि देशस्य प्रजाः सैनिकरूपेण सज्जीकृतवान् । ताभ्यः उत्तमं शिक्षणं दत्त्वा तासु धैर्यम् उत्पादितवान् ।

हनूमान् स्वसैनिकान् - "रामराज्ये यदि सर्वे अपि रामसैन्यं प्रविशन्ति, तर्हि यत्किमपि साधयितुं शक्यते । कुतश्चित् अपि क्लेशः न भवति" इति बोधयन् शत्रूणां सम्मुखीकरणार्थं तान् प्रेरितवान् । देशस्य सर्वाः अपि प्रजाः हनूमतः नायकत्वे घोरकलिना कालकलिना च सह युद्धम् आरब्धवत्यः । युद्धरङ्गद्वये अपि सहस्राधिकाः हनूमन्तः दृश्यन्ते स्म । एतेन हनूमान् सहस्ररूपः आञ्जनेयः इति प्रख्यातः जातः ।

कुशः वीरावेशेन युद्धं कुर्वन् घोरकलिम् आग्नेयास्त्रेण मारितवान् । रामसैनिकाः घोरकलिसैनिकान् सम्यक् ताडितवन्तः । रामसैन्यस्य जयः जातः ।

लवः कालकलिना सह घोरं युद्धं कुर्वन् वारुणास्त्रेण तं मारितवान् । रामसैनिकाः कालकेयराक्षसान् सम्यक् ताडितवन्तः । हनूमान् स्वपुच्छेन शत्रूणां नौकाः बद्ध्वा समुद्रे मज्जितवान् । नौकाभिः सह कालकेयादयः अपि समुद्रे लीनाः । रामसैन्यस्य विजयः जातः ।

उभयत्रापि विजयं साधयित्वा हनूमान् प्रजाः बोधितवान् - "रामराज्ये एकैकः अपि जनः चिन्तयेत् यत् - अहं लवकुशयोः सहोदरः इति । सर्वैः अपि परस्परं सहोदरभावेन परस्परप्रीत्या च भवितव्यम् । यस्य कस्यापि कष्टं भवति चेत् तत् स्वकष्टम् इति मत्वा तदर्थं साहाय्यं करणीयम् । एषा एव वास्तविकी देशभक्तिः । एतदर्थं सर्वैः परिश्रमः करणीयः" इति ।

हनूमतः वचनं सर्वे अपि अङ्गीकृतवन्तः ।

हनूमतः प्रोत्साहवचनेन लवकुशौ उत्तेजितौ । युद्धे विजयः साधितः इति स्मरणार्थं कुशः कुशावतीनगरं, लवः लवन्तिकानगरं च नूतनतया स्थापितवन्तौ ।

राज्यपरिपालने नितरां समर्थयोः लवकुशयोः बल-पराक्रमादीनां विषये हनूमतः महान् विश्वासः । रामराज्यस्य नाम सार्थकं कुर्वन्तौ तौ दृष्ट्वा हनूमान् अतीव सन्तुष्टः । सः कदाचित् लवकुशौ उक्तवान् -

"इदानीम् अहं गन्धमादनपर्वतं प्रति गच्छामि" इति।

लवकुशौ हनूमतः वचनम् अङ्गीकृतवन्तौ।

लवकुशौ महत्या शोभायात्रया हनूमन्तं गन्धमादनपर्वतं प्रापितवन्तौ। हनूमान् लवकुशौ - "चिरकालं रघुवंशस्य गौरवं रक्षन्तौ सुखेन जीवताम्" इति आशिषा अनुगृहीतवान्। अनन्तरं प्रजासमूहम् उद्दिश्य उक्तवान् - "ऐकमत्येन कार्यं कुर्वन्ति चेत् असाध्यम् इति किमपि न भवति। रामराज्ये सर्वे अपि लवकुशरूपिणः एव। भवन्तः सर्वे रामराज्यस्य रक्षणार्थं यत्नं कुर्वन्तु" इति।

तदा प्रजाः हनूमन्तं नमस्कृत्य - "जयतु वीरहनूमान्" इति उच्चस्वरेण जयघोषं कृतवत्यः। अनन्तरं हनूमान् तपः कर्तुं गन्धमादनपर्वतं प्रति गतवान्।

लवकुशौ अनन्तरकाले उत्तमरूपेण राज्यपालनं कृतवन्तौ। तौ रामराज्यस्य नाम सार्थकीकुर्वन्तौ रघुवंशस्य कीर्तिं वर्धितवन्तौ। तौ चिरकालं यावत् राज्यपालनं कृतवन्तौ।

हनूमान् गन्धमादनपर्वते तपः आचरति स्म।

• • •

एवं गन्धमादनपर्वते तपसि मग्नस्य हनूमतः कदाचित् ध्यानभङ्गः जातः। तदा सः नेत्रे उन्मील्य दृष्टवान्। पर्वताः अतीव वामनाः दृश्यन्ते। महावृक्षाः अपि इदमिदानीम् अङ्कुरितानि लघुसस्यानि इव भासन्ते। गजाः मूषकाः इव दृश्यन्ते। सः आकाशं दृष्टवान्। सप्तर्षिमण्डलं ध्रुवनक्षत्रतः दूरे स्थितम् अस्ति।

एतत् सर्वम् अवलोक्य हनूमान् चिन्तितवान् यत् युगं परिवृत्तम् अस्ति इति। तावता त्रिकालज्ञानी नारदः तत्र आगत्य - "इदानीं द्वापरयुगम् आरब्धम् अस्ति हनूमन्! एतस्य द्वापरयुगस्य चतुर्थे पादे भवतः रामदर्शनं भविष्यति" इति उक्त्वा अदृश्यतां प्राप्य ततः गतवान्।

हनूमान् पुनरपि नेत्रे निमील्य तपः आरब्धवान्।





# मानवमीनः

पश्चिमसमुद्रतीरस्थस्य केरलराज्यस्य आधीन्ये पूर्वं कश्चन द्वीपः आसीत् । तस्य द्वीपस्य भूमिः शिलामयी आसीत् । अतः तत्र कृष्यादिकम् असाध्यम् आसीत् । अतः तत्रत्याः जनाः मत्स्यग्रहणम् एव प्रधानवृत्तिं कृत्वा जीवन्ति स्म ।

तस्मिन् द्वीपे कश्चन वृद्धः धीवरः निवसति स्म । तस्य पुत्राः बहवः । तेषु द्वौ वणिङ्नौकायाम् उद्योगं प्राप्तवन्तौ आस्ताम् । अन्ये सर्वे धीवरवृत्तिम् एव आश्रित्य पितुः साहाय्यम् आचरन्तः आसन् । किन्तु वृद्धस्य कनिष्ठस्य पुत्रस्य स्वभावः एव विचित्रः । सः प्राणिहिंसां सर्वथा न सहते स्म । मरणं प्राप्नुवतः मीनान् दृष्ट्वा सः खेदम् अनुभवति स्म । बाल्ये सः पित्रा अग्रजादिभिः सह वा मीनग्रहणार्थं समुद्रतीरं गच्छति स्म । ततः प्रत्यागमनसमये तेनापि मीनकण्डोलः आनेतव्यः भवति स्म एव । एवं मीनकण्डोलस्य आनयनसमये यदि कश्चित् मीनः सजीवं तेन दृश्येत तर्हि सः तं समुद्रं प्रापयति स्म । अतः कदाचित् गृहप्राप्तिसमये अर्धांशाः मीनाः कण्डोले न भवन्ति स्म ।

एवं प्राणिदयावते तस्मै मीनग्रहणवृत्तिः सर्वथा न अरोचत । किन्तु मीनेषु समुद्रे च तस्य महती प्रीतिः । सः प्रतिदिनं समुद्रतीरे दीर्घकालम् उपविशति स्म । घण्टां घण्टाद्वयं यावत् वा समुद्रे तरणं करोति स्म सः । समुद्रे तरन् सः तलप्रदेशं गच्छति स्म । समुद्रतले वर्णमयानि दृश्यानि नितराम् आकर्षकाणि भवन्ति स्म । ततः आकृष्टः सः तत्रैव सञ्चारम् अभ्यस्तवान् । एवं समुद्रतले विहरन् सः दीर्घकालं समुद्रतले स्थितौ निपुणः जातः । अतः सः इदानीं गभीरम् अपि समुद्रप्रदेशं गन्तुं शक्नोति । तादृशे तले विचित्रान् मीनान् प्रवालाङ्कुरान् च पश्यन् सः सन्तोषम् अनुभवन् दिनानि यापयति स्म ।

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दामामायां प्रकाशिता कथा''



यदा सः तरुणः जातः तदा तदीयं तरणसामर्थ्यं नितरां प्रवृद्धम् । सः समुद्रस्य अन्तः जले यावत्कालं तिष्ठति तावत् स्थातुं तत्प्रदेशे कोऽपि न शक्नोति स्म । अतः जनाः तं 'मानवमीनः' इति वदन्ति स्म ।

सः प्रतिदिनं उषसि एव समुद्रं प्रविशति स्म । सायं सूर्यास्तानन्तरं गृहं प्रत्यागच्छति स्म । गृहं प्रत्यागत्य अग्रजान् मित्राणि च समुद्रतले आत्मना दृष्टानि वैशिष्ट्यानि वदति स्म ।

जले निमग्नाः महानौकाः समुद्रतले तेन दृष्टाः आसन् । तादृशीः नौकाः परितः विचित्राः जललताः प्रवृद्धाः दृश्यन्ते स्म । कुत्रचित् नील-रक्त-श्वेतादिप्रवालाः समूहरूपेण दृश्यन्ते स्म । विविधानि मौक्तिकानि अपि दृश्यन्ते स्म तत्र । नक्षत्राकारकाः मीनाः, दर्पणस्वच्छाः मीनाः चापि तेन दृश्यन्ते स्म ।

एतत्सर्वं सः अग्रजानां पुरतः वर्णयति स्म । किन्तु ते एतादृशस्य श्रवणे अनुत्सुकाः । 'भवतः मतिः भ्रष्टा अस्ति' इति ते तं वदन्ति स्म । माता भावयति स्म यत् केनचित् पिशाचेन एषः ग्रस्तः अस्ति इति । अतः मन्त्रवादिद्वारा सा पूजादिकं कारितवती । किन्तु एतस्य व्यवहारे तु किमपि परिवर्तनं तु न जातम् ।

गच्छता कालेन तदीयं 'मानवमीनः' इति नाम सर्वत्र प्रसिद्धम् । तस्य देशस्य राजा अपि एषा प्रसिद्धिः श्रुता । राजा कुतूहलं प्राप्य तं स्वस्य आस्थानम् आनायितवान् ।

यदा एषः राजास्थानं गतवान् तदा षोडशवर्षीया राजकुमारी अपि तत्रैव आसीत् । एतं दृष्ट्वा राजा पृष्टवान् - "भवान् गभीरे समुद्रे दिनं यावत् तरणं कर्तुं शक्नोति इति, तरणे समर्थः भवादृशः अन्यः प्रपञ्चे एव कुत्रापि नास्ति इति च श्रूयते । सत्यं वा एतत् ?" इति ।

"जनाः अभिमानेन तथा वदन्ति महाराज !" इति विनयेन उक्तवान् सः मानवमीनः ।

"भवतः शक्तिं परीक्षितुम् इच्छामि" इति उक्त्वा समुद्रतीरं गत्वा पुत्र्या मानवमीनेन च सह नौकाम् आरुह्य समुद्रमध्यं प्राप्तवान् राजा । तत्र एकं सुवर्णपात्रं समुद्रे पातयित्वा मानवमीनम्

उक्तवान् सः - ''तत् सुवर्णपात्रम् आनयतु'' इति।

मानवमीनः झटिति जलं प्रविश्य समुद्रतलं प्राप्तवान्। तत्र राज्ञा पातितं सुवर्णपात्रं, सुन्दरं प्रवालाङ्कुरं च प्राप्य सः उपरि आगतवान्। प्रवालाङ्कुरं राजकुमार्यै समर्प्य सुवर्णपात्रं राज्ञे दत्तवान्।

तदा राजा तत् सुवर्णपात्रं मानवमीनाय एव प्रत्यर्पयन् - ''एतत् पारितोषिकरूपेण भवते दीयते मया। मया अन्यत् कार्यम् उच्यते। तत् कर्तुं शक्नोति वा भवान्?'' इति पृष्टवान्।

''प्रयत्नं तु करिष्यामि'' इति उक्तवान् मानवमीनः।

''एतं द्वीपं परितः समुद्रतले सञ्चारं कृत्वा तत्रत्यान् विशेषान् ज्ञात्वा आगत्य अहं वक्तव्यः'' इति उक्तवान् राजा।

''कठिनतरं कार्यम् एतत्'' इति उक्तवान् मानवमीनः।

''आम्। अतः एव मया अवधिः न सूचितः। समुद्रतले द्वीपस्य परिक्रमणं कर्तुं न शक्तं चेत् भवता पुनः मत्समीपम् आगन्तव्यं नास्ति'' इति उक्तवान् राजा।

''यथाज्ञापयति प्रभुः'' इति उक्त्वा राजकुमारीं सकृत् कटाक्षेण दृष्ट्वा ततः गतः मानवमीनः समुद्रतलं प्रविष्टवान्। मासत्रयस्य अनन्तरं सः प्रत्यागतवान्।

राजानं दृष्ट्वा उक्तवान् सः - ''महाराज! अस्माकं द्वीपस्य आधाररूपेण त्रयः पर्वताः सन्ति। ते त्रयः अपि पर्वताः शिलामयाः



सन्ति। किन्तु तेषु एकस्य पर्वतस्य शिखरं नश्यमानम् अस्ति'' इति।

''नश्यमानम् अस्ति वा? किमर्थम्?'' इति पृष्टवान् राजा।

''तस्य पर्वतस्य पार्श्वे एव कश्चन अग्निकूपः दृश्यते। ततः आगताः अग्निज्वालाः शिखरस्थाः शिलाः नाशयन्त्यः सन्ति। अतः एव तत्प्रदेशे समुद्रलतादयः मीनाः वा न दृश्यन्ते'' इति उक्तवान् मानवमीनः।

''जलस्य अन्तः अग्निः भवितुम् अर्हति वा? कथम् एतत्?'' इति आश्चर्येण पृष्टवान् राजा।

''महाराज! वडवाग्निः भवता श्रुतः स्यात् खलु? तस्य स्थितिः समुद्रस्य अन्तः

एव'' इति उक्तवान् मानवमीनः।

''वडवाग्निः अस्ति इति कथादिषु श्रुतं मया। यदि सः अग्निः एव आनीय प्रदर्श्येत तर्हि मम विश्वासः भवेत्'' इति उक्तवान् राजा।

मानवमीनः पुनरपि समुद्रतलं गतवान्। अग्निकूपस्य समीपम् अपि गतवान् सः। तावता तस्य हस्तौ पादौ च दग्धौ। एवं दग्धाङ्गः सः महाराजसमीपम् आगत्य - ''प्रभो! अग्निम् आनेतुं किं, तत्समीपं गन्तुम् अपि च शक्तवान् अहम्। किन्तु समुद्रतले अग्निः अस्ति इत्यत्र मम दग्धौ हस्तौ पादौ चैव प्रमाणम्'' इति निवेदितवान्।

''इदानीं भवतः वचने विश्वासः उत्पन्नः। अपूर्वं सामर्थ्यं भवतः'' इति उक्तवान् राजा।

''एतत्सन्दर्भे समुद्रपर्वतस्य शिखरस्य समीपे एव गतवान् आसं खलु अहम्? शिखरस्य भूयान् भागः अग्निना दग्धः जातः अस्ति। अतः मम तु भासतेऽयत् महती विपत् उपस्थिता भवेत् इति'' इति उक्तवान् मानवमीनः।

राजा तस्य वचने विश्वसन् तद्द्वीपवासिनः सर्वान् आज्ञापितवान् यत् सपरिवारं सर्वैः अन्यत्र गन्तव्यं, केनापि अत्र न स्थातव्यम् इति। ततः केषाञ्चित् दिनानाम् अनन्तरं तस्मिन् द्वीपे महान् भूकम्पः जातः। द्वित्रेषु दिनेषु एव स च द्वीपः समग्रः समुद्रे लीनः अभवत्।

राजा मानवमीनम् आनाय्य - ''भवत्कारणतः सहस्राधिकजनानां पशूनां च जीवनं रक्षितम् अभवत्। अहं सन्तुष्टः अस्मि। भवते किं ददामि? वदतु तावत्'' इति उक्तवान्।

मानवमीनः राजकुमारीं कटाक्षेण दृष्ट्वा मौनम् आश्रितवान्। राजा तस्य इङ्गितं ज्ञातवान्। अवनतमुख्याः राजकुमार्याः लज्जायुक्तः मन्दहासः एव निवेदयति स्म यत् तस्याः आशयः कः इति।

ततः राजा मानवमीन - राजकुमार्योः विवाहं सवैभवं निर्वर्त्य मानवमीनं स्वस्य उत्तराधिकारिणं कृतवान्।





# सज्जनः माधवः

शिवपुरनामके ग्रामे मालतीनामिका काचित् युवतिः आसीत् । सा कदाचित् पुष्पाणि अवचेतुम् उद्यानं गतवती । तत्र कश्चित् चोरः अकस्मात् आगत्य लवित्रं प्रदर्शयन् – "भवत्या धृतानि सर्वाणि आभरणानि ददातु । नो चेत् भवतीं मारयामि" इति तां भायितवान् ।

'यदि आभरणानि चोराय ददामि, तर्हि पुनः जीवने एतादृशानि आभरणानि कारयितुं महत् कष्टम् । अतः इदानीं किं करणीयम् ?' इति यावत् मालती चिन्तयन्ती आसीत् तावता कुतश्चित् आगतः युवकः कश्चित् चोरस्य उपरि आक्रमणं कृतवान् । चोरं पराजितवान् च । चोरः ततः पलायितः । युवकस्य पराक्रमेण सन्तुष्टा मालती तं पृष्टवती – "भवान् कः ? कुतः आगतवान् भवान् ?" इति ।

तदा सः युवकः – "मम नाम माधवः । अहं बहुविधाः विद्याः जानामि । मम पिता वृद्धः । सः वदति यत् भवान् गृहे एव स्थित्वा तक्षकवृत्त्या धनं सम्पादयतु इति । किन्तु मम तत्र इच्छा नास्ति । अहं सर्वत्र सञ्चरन् विविधानि कार्याणि कुर्वन् धनं सम्पादयामि । मम ग्रामः इतः अनतिदूरे स्थितं चन्दनपुरम् । गृहे अहं मम पिता च निवसावः । तदस्तु, भवती का ? भवती किमर्थम् एकाकिनी अत्र आगतवती ?" इति पृष्टवान् ।

"मम नाम मालती इति । मम गृहे अहं मम पिता च निवसावः । मम पिता सुगन्धतैलं निर्माय विक्रयणं करोति । मम पितुः धनाशा अधिका । सः धनव्ययं न इच्छति । अतः सुगन्धतैलनिर्माणार्थम् अपेक्षितानि पुष्पाणि मया एव आनेतव्यानि । सुगन्धतैलस्य विक्रयणम् अपि मया एव करणीयम् । मम पिता न अटति ।



'एतावत् धनम् अस्माकं कृते किमर्थम् ?' इति पृष्टं चेत् सः वदति यत् भवत्याः विवाहार्थम् एतत् इति । वस्तुतः सः मम विवाहं न इच्छति । 'यदि पुत्र्याः परिणयः भवेत् तर्हि आयः स्थगितः स्यात्' इति तस्य चिन्तनम् । अद्य यदि भवान् मां चोरतः न रक्षितवान् स्यात् तर्हि 'सुवर्णाभरणं भवती नाशितवती' इति मां सम्यक् अतर्जयिष्यत् सः'' इति उक्तवती मालती ।

एतत् श्रुत्वा माधवः - ''पिता देवसमानः । 'पितृदेवो भव' इति वदति उपनिषत् । अतः पितृनिन्दा न उचिता । भवत्याः विवाहार्थं पिता प्रयत्नं न करोति चेदपि भवत्याः विवाहः अचिरात् एव प्रचलिष्यति । सुवर्णवर्णा सुन्दरी भवती मम मनः आकृष्टवती अस्ति । यदि भवत्याः अङ्गीकारः स्यात् तर्हि अहं भवतीं परिणेष्यामि । ततः एतादृशम् अटनं भवत्याः जीवने न भविष्यति'' इति उक्तवान् ।

''भवान् मां परिणेतुं सिद्धः स्यात् । किन्तु अहं भवन्तं परिणेतुं न सिद्धा'' इति उक्त्वा ततः निर्गतवती मालती ।

ततः आरभ्य माधवः प्रतिदिनं मालत्याः ग्रामं प्रति आगमनम् आरब्धवान् । सः वृक्षस्थानां पुष्पाणाम् अवचयने मालत्याः साहाय्यं करोति स्म । तदा तदा तस्यै उपायनरूपेण किमपि अर्पयति स्म । तथापि मालती तस्मिन् अनुरक्ता न जाता ।

तद्ग्रामीणा वृद्धा काचित् पुष्पार्थं तदा तदा मालत्याः समीपम् आगच्छति स्म । सा माधवस्य व्यवहारं ज्ञातवती । एतद्विषये मालतीं पृष्टवती च । तदा मालती उक्तवती यत् माधवे मम अनुरागः नास्ति इति । वृद्धा एतं विषयं माधवं निवेद्य - ''वत्स ! वृथा किमर्थं तस्याः युवत्याः अनुसरणं करोति भवान् ? सा भवति सर्वथा अननुरक्ता । अतः इतःपरं वृथा एतं ग्रामं मा आगच्छतु'' इति उक्तवती ।

''अम्ब ! भवती ज्येष्ठा । मम मातृसमाना भवती । अतः भवतीं पृच्छामि । मालती मयि अनुरक्ता यथा स्यात् तथा कर्तुं मया किं करणीयम् ?'' इति वृद्धां पृष्टवान् माधवः ।

''भवता साहसं प्रदर्शितम् । प्रशंसा कृता । उपायनं दत्तम् । तथापि सा अनुरागवती न जाता । इतः परम् अवशिष्टः

एकः एव मार्गः । कथमपि भवता तस्याः अनुकम्पपात्रत्वं प्राप्तव्यम्'' इति उक्त्वा सा वृद्धा ततः निर्गतवती ।

वृद्धायाः उपदेशं स्मरन् माधवः अनन्तरदिने मालतीं दृष्ट्वा उक्तवान् - ''विशेषकार्यं नास्ति चेदपि भवत्याः निमित्तम् अहम् एतं ग्रामम् आगच्छामि स्म । अतः मम आये न्यूनता जाता । दैनन्दिनभोजनार्थं यावत् आवश्यकं तावदपि सम्पादनं नास्ति मम'' इति ।

''तर्हि इतः परम् एतं ग्रामं मा आगच्छतु'' इति उक्त्वा ततः निर्गतवती मालती । अन्यदा कदाचित् पुष्पावचयनार्थं वृक्षम् आरूढवान् माधवः वृक्षात् अधः पतितवान् । पतनात् व्रणाः जाताः । 'वृक्षारोहणम् अजानता एतादृशः प्रयत्नः किमर्थं करणीयः ?'' इति उक्त्वा ततः निर्गतवती मालती ।

पुनः कदाचित् पुष्पावचयने मग्नां मालतीं दंष्टुं कश्चन सर्पः आगच्छत् । एतत् दृष्ट्वा माधवः झटिति अग्रे गत्वा सर्पस्य पुच्छं गृहीत्वा आकृष्टवान् । सर्पः माधवम् अदशत् । दिग्भ्रान्ता मालती धावन्ती ग्रामं गत्वा वैद्यम् आनीतवती । वैद्यः चिकित्सया माधवम् उज्जीवितवान् । तदा मालती उक्तवती - ''यदि सर्पः माम् एव दष्टवान् स्यात् तर्हि वरम् अभविष्यत् । धावनं, वैद्यस्य आनयनम्, आतङ्कः इत्यादयः मम न अभविष्यन्'' इति ।

एतत् श्रुत्वा समीपे स्थिता वृद्धा मालतीं



स्वसमीपम् आहूय - ''माधवः बुद्धिमान् सुन्दरः च । भवत्यां नितराम् अनुरक्तः अपि अस्ति सः । प्राणान् पणीकृत्य भवतीं सः रक्षितवान् अस्ति अपि । तादृशस्य परिणयः एव वरं खलु ? तेन भवत्याः भाविजीवनं सुखमयं भवेत्'' इति बोधितवती ।

''किन्तु तस्मिन् मम अनुरागः नास्ति खलु !'' इति उक्तवती मालती ।

''तथा किमर्थम् ?'' इति पृष्टवती वृद्धा ।

''मम पिता मद्द्वारा बहूनि कार्याणि कारयति । माम् अबलां ज्ञात्वा अपि सः अटनादिषु मां प्रवर्तयति । किन्तु माधवस्य पिता पुत्रं गृहे एव स्थापयितुम् इच्छति । एषः माधवः तु तादृशस्य पुत्रवत्सलस्य वचनं तृणीकृत्य सर्वत्र अटति । एतादृशे मम



अनुरागः कथं वा भवेत् ?'' इति उक्तवती मालती ।

तदा वृद्धा - ''वत्से ! भवती पितृविषये अन्यथा चिन्तितवती । सः भवत्याः हितार्थम् एव एतत्सर्वं कुर्वन् अस्ति । विवाहसमये आभरणादीनां निमित्तं महान् व्ययः करणीयः भविष्यति खलु ? यदि भवती धनसम्पादनं न कुर्यात् तर्हि पूर्वसञ्चितं धनं समाप्तं भवेत् । धनाभावे विवाहस्य निर्वर्तनं कथं स्यात् ?'' इति उक्तवती ।

''अस्तु । मम निमित्तम् एव मम पिता धनसञ्चयं कुर्वन् अस्ति इत्येव भावयामि । तथापि निर्धनस्य माधवस्य परिणयः मम पितुः सन्तोषाय न भवेत्'' इति उक्तवती मालती ।

अनन्तरदिने वृद्धा माधवं दृष्ट्वा मालत्या उक्तं सर्वं निवेदितवती । माधवः तस्मिन् एव दिने मालतीं दृष्ट्वा - ''अहं पितरं सम्यक् पोषयन् नास्मि इति चिन्तितवती अस्ति खलु भवती ? अतः भवती सकृत् मम पितरं दृष्ट्वा वार्तालापं करोतु । तदा वस्तुस्थितिः ज्ञायते भवत्या'' इति उक्तवान् ।

मालती क्षणकालं विचिन्त्य - ''अस्तु, श्वः एव अहं भवतः ग्रामं गमिष्यामि । किन्तु तत्समये भवता गृहे न भवितव्यम्'' इति उक्तवती । माधवः एतत् अङ्गीकृतवान् ।

मालती अनन्तरदिने वृद्धया सह चन्दनपुरं गतवती । उभे अपि माधवगृहसमीपं गतवत्यौ । माधवस्य गृहं राजगृहम् इव आसीत् । गृहकार्यार्थं बहवः दास-दास्यः आसन् । कश्चन वृद्धः महाराजः इव गृहस्य अन्तः उपविष्टः आसीत् । सः एव माधवस्य पिता ।

मालती आश्चर्यम् अनुभवन्ती गृहं प्रविश्य सुगन्धतैलं प्रदर्श्य, तैलस्य वैशिष्ट्यं वर्णयित्वा पृष्टवती - ''गृहे अन्यः कोऽपि नास्ति वा ?'' इति ।

तदा सः वृद्धः - ''हुं, अस्ति कश्चन पुत्रः अपि । तस्य नाम माधवः इति । अविनीतशिखामणिः सः । गृहे तिष्ठन् एव कमपि उद्योगं करोतु इति मया उक्तं चेत् मम वचनं धिक्कृत्य ग्रामे ग्रामे अटति सः'' इति ।

तदा वृद्धा पृष्टवती - ''दर्शनात् तु ज्ञायते यत् भवान् धनिकः इति । अतः पुत्रः गृहे सुखेन तिष्ठति चेत् पर्याप्तं खलु ? तेन पुनः

उद्योगः अपि किमर्थं करणीयः ?'' इति।

''अहो ! अपूर्वः प्रश्नः पृष्टः भवत्या । योग्यं मार्गदर्शनम् एतत्'' इति उक्त्वा वृद्धां तिरस्कारदृष्ट्या पश्यन् - ''गृहे सुखेन तिष्ठता मया परम्पराप्राप्ता सम्पत्तिः समग्रा नाशिता । यदा एषः माधवः पञ्चदशवर्षीयः आसीत् तदा कुटीरे वासः आसीत् अस्माकम् । चिकित्सार्थं धनं नास्ति इत्यतः मम पत्नी व्याधिग्रस्ता दिवङ्गता । पत्नीवियोगतासः अहं शय्याम् आश्रितवान् । ततः माधवः धनसम्पादनार्थम् उद्युक्तः जातः । पञ्चभ्यः वर्षेभ्यः पूर्वम् एतत् भवनं क्रीतम् । दास-दास्यः नियोजिताः । पूर्वं वैभवोपेतं जीवनम् आसीत् मम । अतः इदानीम् अपि तादृशम् एव इच्छामि अहम्'' इति उक्तवान् सः वृद्धः ।

''भवतः पुत्रः अस्माकं ग्रामम् अपि आगच्छति । किन्तु सः वेषेण निर्धनः इव भासते । किमर्थम् एतत् ?'' इति पृष्टवती वृद्धा ।

तदा सः वृद्धः उच्चैः हसन् - ''तथैव भवितव्यम् इति अहम् एव आदिष्टवान् अस्मि । बाल्यात् एव वैभवोपेतं जीवनं भवति चेत् अग्रे कष्टं भवेत् । अत्र अहम् एव उदाहरणम् । अतः सः सामान्यः इव एव जीवतु इति मम आशयः । सः भाग्यवान् न । अतः यदा सः बालः आसीत् तदा मम सम्पत्तिः नष्टा । इदानीं तु अदृष्टदेवी मदनुकूला अस्ति । अतः सः किञ्चित् धनं सम्पादयति । सः यावत् सम्पादयति तावत्



मम व्ययार्थम् एव व्ययितं भवति । स्वनिमित्तम् इतोऽप्यधिकं धनं सम्पादयितुं मार्गं न जानाति मूर्खः सः'' इति उपेक्षामिश्रितस्वरेण उक्तवान् ।

ततः मालत्या दर्शिताः सर्वाः सुगन्धतैलकूपीः क्रीत्वा सः पुनः उक्तवान् - ''भद्रे ! अद्य भवत्याः सौभाग्यम् । एतादृशस्य निमित्तं मम पुत्रः व्ययं न सहते । तावदेव न, अहं मम सन्तोषार्थं सुराम् आनीय पिबामि चेत् अपि मां निन्दति सः । मम सन्तोषं दृष्ट्वा असूयति सः । स्वसन्तोषार्थम् अहं धनव्ययं करोमि चेत् तेन किमर्थं निवारणीयम् ? अविवेकी सः'' इति ।

मालती वृद्धा च ततः निर्गतवत्यौ । मार्गे वृद्धा मालतीम् उक्तवती - ''माधवः

चिन्तितवान् आसीत् यत् तदीयः पिता भवत्याः पुरतः पुत्रस्य प्रशंसां कुर्यात् इति। अत्र तु विपरीतं संवृत्तम्। अतः भवत्याः माधवस्य च विवाहः दैवसम्मतः न इति भाति'' इति।

मालती प्रतिवचनं किमपि न उक्तवती। यदा शिवपुरम् आसन्नं तदा अभिमुखम् आगतम् माधवम् दृष्ट्वा उक्तवती मालती - ''अहं भवतः पितरं दृष्टवती'' इति।

तदा माधवः हसन् - ''मया अपि भवत्याः पिता दृष्टः। आवयोः विवाहः निश्चितः। मम पूर्वापरं सर्वं विचार्य भवत्याः पिता उक्तवान् - 'मया यावत् सम्पादितं तत्सर्वं भवतः एव। भवन्तं सुगन्धतैलनिर्माणक्रमं बोधयिष्यामि। ततः प्रभूतम् आयः अस्ति। भवान् कानिचन दिनानि मम ग्रामे तिष्ठतु। अहं भवतः ग्रामं गत्वा भवतः पितरं बोधयिष्यामि यत् पुत्रः स्नुषा च कथं प्रीत्या द्रष्टव्यौ इति' इति। अचिरात् एव आवयोः विवाहः भविष्यति'' इति उक्तवान्।

''अहं भवन्तं परिणेतुं सिद्धा अस्मि इति कथं निर्णीतं भवता ?'' इति आश्चर्येण पृष्टवती मालती।

''कथम् इति ? मम पितरं मदीयः शत्रुः पश्यति चेदपि सः मयि अनुकम्पवान् भवेत् एव। भवत्या मम पिता दृष्टः। अनुकम्पतः एव अनुरागः उत्पद्यते इति एषा वृद्धा मां बोधितवती आसीत्। ज्येष्ठानां वचने विश्वासः मम'' इति उक्तवान् माधवः।

पिता सन् अपि पुत्रस्य विषये अन्येषां पुरतः माधवपिता उत्तमवचनं न वदति यत्, केवलं स्वसुखम् एव सः पश्यति यत्, एतादृशस्य अधमस्य अपि निमित्तं माधवः समग्रम् आयं समर्पयति यत् तत्सर्वं दृष्टवती मालती। माधवस्य सज्जनत्वम् अवगतवती सा। 'विवाहानन्तरं पुत्र्याः जामातुः च सुखं चिन्तयन् मम पिता एव श्रेष्ठः' इत्यपि ज्ञातवती सा। सर्वस्य परिशीलनात् मालती माधवे अनुकम्पवती अनुरागवती च जाता।

ततः मालती-माधवयोः विवाहः सम्पन्नः। तौ सुखेन जीवितवन्तौ।



# प्रकृतिवैचित्र्याणि




## मुण्डान्तुरै-आरक्षितारण्यस्य वैशिष्ट्यम्

तमिळ्नाडुराज्ये स्थितं मुण्डान्तुरै-आरक्षितारण्यं सर्वेषाम् अवधानम् आकर्षत् अस्ति । अत्र कारणद्वयम् । तत्र व्याघ्रसङ्ख्यायां वृद्धिः दृश्यते इति तु प्रथमं कारणम् । षड्भ्यः वर्षेभ्यः पूर्वं तत्र शिखायुक्ताः मञ्जुलनादशीलाः 'वारब्लर्' नामकाः पक्षिणः दृष्टिगोचराः जाताः इति तु अपरं कारणम् । विविधाः वारब्लर्पक्षिणः इदानीम् अपि तत्र वासार्थम् आगच्छन्ति । शिखायुताः मञ्जुलनादशीलाः वारब्लर्पक्षिणः तु क्वचित्कतया दृश्यन्ते । क्यालिफोर्नियाविश्वविद्यालये विद्याभ्यासं कुर्वन् भारतीयः युवकः मधुसूदन कट्टी एतेषां पक्षिणां विषये संशोधनं कुर्वन् अस्ति ।

मद्रास्समीपस्थं वेडन्ताङ्गल्-पक्षिधाम प्रति विविधवर्णीयाः बकाः, प्रवासप्रसिद्धाः स्वालोपक्षिणः, सैबीरियामूलाः कारण्डवाः, अन्यविधाः बहवः पक्षिणः च प्रतिवर्षम् आगमिष्यन्ति । अस्माकं देशस्य प्राचीनेषु पक्षिधामसु अन्यतमम् अस्ति वेडन्ताङ्गल्पक्षिधाम ।

## तिमिङ्गिलानाम् आत्महत्या



न्यूजीलाण्ड्देशस्य नेल्सन् प्रदेशस्थे 'फेर्वेल् स्पिट्' नामके समुद्रतीरे एषा विचित्रघटना प्रवृत्ता । प्रायः तिमिङ्गिलाः गभीरे समुद्रे विहरन्तः जीवन्ति । अत्र तु एते ११ सङ्ख्याकाः तीरम् आश्रितवन्तः । केचन श्वासोच्छ्वासार्थं कष्टम् अनुभवन्तः प्राणैः वियुक्ताः अभवन् । एतान् रक्षितुम् इच्छन्तः केचन एतान् गभीरप्रदेशं प्रति नोदनार्थं प्रयत्नं कृतवन्तः । ततः केचन रक्षिताः । तथापि ४३ तिमिङ्गिलाः तु मृताः एव । एते तिमिङ्गिलाः एवं समूहरूपेण आगत्य किमर्थम् आत्महत्यार्थं प्रयत्नं कृतवन्तः इति तु विज्ञानिभिः अपि न ज्ञायते ।

## पक्षिणां गणना



'यदा विरामसमयः प्राप्यते तदा पक्षिणां गणनां कुर्वन्तु' इति यदि कश्चित् वदेत् तर्हि किम् उत्तरं वदेयुः भवन्तः ? 'न शक्यते' इति खलु ? किन्तु गते नवम्बर्मासे १४ दिनाङ्के अस्माकं देशे ५,००० जनाः पक्षिणां गणनार्थम् अङ्गीकारं सूचयन्तः कार्यप्रवृत्ताः जाताः । यैः अङ्गीकारः दातुम् इष्यते तैः प्रथमं स्वनाम पञ्जीकारयित्वा १८० पक्षिणां नामभिः सहिता आवली प्राप्तव्या । ततः आत्मना गणितानां पक्षिणां सङ्ख्या तत्र लेखनीया । एषा क्रिया एकस्मिन् एव दिने सर्वत्र प्रवृत्ता । भारतीयस्य प्रसिद्धस्य पक्षिशास्त्रविज्ञानिनः डा. सलीम् अलिवर्यस्य स्मरणार्थम् एषा कार्ययोजना कृता आसीत् । नवम्बर्मासस्य १२ दिनाङ्कः सलीमवर्यस्य जन्मदिनाङ्कः । अतः तत्समीपस्थे विरामदिनाङ्के पक्षिणां गणना करणीया इति निर्णीतम् । इतः परम् एषः कार्यक्रमः प्रतिवर्षं प्रवर्तते ।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां जून् - ९४ मासे प्रकटयिष्यामः ।



G. Srinivasa Murthy



Purushottam Vagga

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीयाः -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपसर्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'फेब्रवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

**प्रथमचित्रम् - पश्यत हस्तिनमेनं, वलयितशुण्डादण्डम् ।**

**द्वितीयचित्रम् - पश्यत हस्तावेतौ छायानुकृतिनिपुणौ ।**

प्रेषकः - पि. सत्यनारायणमूर्तिः, १२-३-१(३), अय्यवारिवीथी, भीमवरम् - १ (आ.प्र.)

---




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

Go ahead

Try-Me!



# I remember the day we moved into our new home. The boys and girls on the block looked like they were having 'hazaar' fun. But no, they didn't look too interested in me.

How do you walk up to a new gang and make them your pals? Think...Think. So I just chuck a Try-Me in my mouth...walk my best tough-guy-walk and offer them a handful of Try-Me - "Go ahead, Try Me!" Yeah. I made five new best pals that day.




HTA-8507




**Try-Me!**

**The Bold New Taste**